# श्रीमन्निगमान्तमहादेशिकैः

अनुगृहीता

# यतिराज सप्ततिः

व्याख्याद्वयसहिता

# निवेदन



आचार्यसार्वभौम श्रीवेदान्तदेशिक ने भगवान् रामानुजाचार्य के विषय में **'यतिराज सप्तति'** स्तोत्र की रचना की। इस स्तोत्र में स्तुति के साथ-साथ श्रीरामानुज दर्शन के सिद्धान्तों की चर्चा हुई है।

श्रीभाष्यसिंहासनाधिपति स्वामी श्री नीलमेघाचार्य जी महाराज ने इस स्तोत्र की संस्कृत तथा हिन्दी में विस्तृत व्याख्या की है।

वैकुण्ठवासी सेठ श्री मगनीराम जी बाँगड़ की पुण्य स्मृति में उनके आचार्य अनन्तश्रीसमलंकृत जगद्गुरु उत्तराहोबिलझालरिया-मठाधीश्वर स्वामी श्री बालमुकुन्दाचार्य जी महाराज के नाम से **'श्रीबालमुकुन्द ग्रन्थमाला'** का आरम्भ किया गया है।

व्याख्याद्वय समेत यतिराजसप्तति को **'श्रीबालमुकुन्द ग्रन्थमाला'** के प्रथम पुष्प के रूप में प्रकाशित किया गया है। त्रुटियों की ओर ध्यान न देते हुए पाठक गण इसे अपना कर अनुगृहीत करेंगे, ऐसी आशा है।

—**सम्पादक**

॥ श्रीः ॥

॥ श्रीमते लक्ष्मीहयवदनपरब्रह्मणे नमः ॥

॥ श्रीमते रामानुजाय नमः ॥

॥ श्रीमते निगमान्तमहादेशिकाय नमः ॥

—: व्याख्या द्वय सहिता :—

# ॥ यतिराज सप्ततिः ॥



श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

## ॥ संस्कृत व्याख्या ॥

श्रीमच्छ्रीशेषतार्क्ष्यप्रमुखसुरवरैरेकतः सेव्यमानं
सेनेशश्रीशठारिप्रभृतिभिरनघैश्चान्यतः सूरिवृन्दैः ।
श्रीभूनीलाभिजुष्टं प्रसृमरकरुणापाङ्गमानन्दरूपं
वन्दे पादारविन्दप्रणतपरवशं दिव्यधामाधिनाथम् ॥१॥

---

## ॥ हिन्दी व्याख्या ॥

जिनकी सेवा के लिये एक पार्श्व में श्रीशेष गरुड़ आदि सुर वर उपस्थित हैं तथा दूसरे पार्श्व में श्रीविष्वक्सेन, शठकोप आदि सूरिगण विद्यमान हैं। ऐसे दिव्यधाम के स्वामी, प्रणतपरवश आनन्दस्वरूप श्रीदेवी, भूदेवी, तथा नीलादेवी, सहित कल्याण कटाक्षों की वर्षा करते हुये श्रीभगवान् को प्रणाम करता हूँ ॥१॥

सर्वाभीष्टवरप्रदानचतुरो भक्तव्रजानां सदा
धर्मादींश्चतुरः पुमर्थनिवहान् यो दातुकामो भृशम् ।
बिभ्राणश्चतुरो भुजान् करुणया जागर्ति शेषाचले
वन्दे तं हृदयाभिरामवपुषं श्रीवेङ्कटेशं हरिम् ॥२॥

श्रीपादाश्रित—सद्गताखिलतमः—सूर्यायितानुग्रह-
प्राज्ञाग्रेसरनाथयोगियमुनापुत्रादिभिर्भूषितम् ।
श्रीरामानुजयोगिवर्य—निगमान्ताचार्य—गोपालसू-
र्यादि—श्रीगुरुवर्धितप्रथमहं वन्दे गुरूणां कुलम् ॥३॥

दृप्यद्दुैतुकवादिवर्ग — कुमतिक्षीबोक्ति — संक्षोभितं
वेदान्तार्थसुधापयोधिमतलस्पर्शं बुधानामपि ।
गाहन्ते सुधियोऽवरुह्य विमलं यत्सूक्ति—तीर्थान्तरं
तं रामानुजयोगिपुंगवमहं सेवे कृपावारिधिम् ॥४॥

---

भक्तों को सर्व अभीष्ट प्रदान करने वाले, धर्म, अर्थ आदि चतुर्विध पुरुपार्थ के प्रदाता चेतोहारि शरीरधारि वेंकटाचल पर स्थित चतुर्भुज भगवान् श्रीवेंकटेश को नत होता हूँ ॥२॥

सर्वश्री नाथमुनि, यामुनाचार्य, रामानुजाचार्य, वेदान्तदेशिक, गोपालसूरि आदि गुरुजनों से सुशोभित अपनी गुरुपरम्परा को प्रणाम करता हूँ, जिन्होंने अपने श्रीचरण में आश्रित सज्जनों के अज्ञानान्धकार को दूर करने में सूर्य के समान अनुग्रह का प्रयोग किया है ॥३॥

जो वेदान्त शास्त्र दुरभिमानी कुतर्की वादियों से संक्षोभित हो गया है, तथा बड़े २ विद्वान् भी जिसकी गहराई को पा नहीं सकते ऐसे गम्भीर वेदान्तामृत सागर का परिज्ञान जिनकी वाणी से हो जाता है उन श्रीआचार्य रामानुज भगवान् के चरणों की सेवा करता हूँ ॥४॥

विद्यावित्तप्रदानव्रत — हयवदनब्रह्म — पादारविन्द-
द्वन्द्वध्यानैकतानस्तदमितकरुणावाप्तवैदुष्यसीमा ।
यस्तादृक्स्वदाक्ष्य — क्षपित — बहुविधावद्यदुर्वादिपक्ष-
स्तं वन्दे वेदचूडागुरुवरमखिलोज्जीवनार्थावतारम् ॥५॥

ब्रह्मज्ञानप्रदत्वादघपरिहरणादच्छसंविन्मयत्वा-
दानन्दैकाकृतित्वादमितशुभगुणैकालयत्वाद्विभुत्वात् ।
नित्यं सत्यव्रतत्वात्सकलबुधकुलाभ्यर्चितत्वाद्वशित्वा-
च्छ्रीमच्छ्रीरङ्गरामानुजगुरुमनिशं विष्णुरूपं नमामि ॥६॥

वात्स्यैःदोर्वरदार्यदेशिक — गुरोर्मान्याद् बुधाग्रेसरे-
र्जातो यः कमलासती — सदुदरे श्रीनीलमेघः सुधीः ।
श्रीवेदान्तगुरूत्तमेन रचितान् ग्रन्थान् जनोज्जीवनान्
व्याचष्टेऽखिललोकबोधनकृते हिन्द्यां तथा संस्कृते ॥७॥

---

जिन्होंने श्रीभगवान् हयग्रीव की परम करुणा से परिपूर्ण विद्वत्ता प्राप्त की है, विद्यादान ही जिनका व्रत है, अपनी विद्वत्ता एवं कुशलता से जिन्होंने दुर्वादियों का मुख मुद्रित कर दिया है, जिनका जन्म लोकोज्जीवन के लिये हुआ है ऐसे वेद वेदान्त के मर्मज्ञ श्रीवेदान्तदेशिक को प्रणाम करता हूँ ॥५॥

ब्रह्मज्ञान के प्रदाता, पापनिवारणकर्ता, शुद्ध बुद्धि प्रदाता, आनन्द स्वरूप, अनन्त-कल्याण-गुणाकर, सत्य में दीक्षित सब विद्वद्गणों द्वारा समर्चित वशी गुरुवर श्रीरङ्ग रामानुज महाराज के चरणों में नत होता हूँ ॥६॥

वात्स्य कुलकुमुद सुधाकर श्रीवरददेशिक जिसके जनक हैं श्रीसती कमला जिसकी माता हैं, इनका पुत्र श्रीनीलमेघाचार्य सुधी श्रीवेदान्त

इह खलु भगवान् आत्रेयरामानुजाचार्यवरिवस्यालब्ध-वेदवेदान्तदिव्यज्ञानः "त्रिंशद्वारं श्रावितशारीरकभाष्यः" इत्युक्तरीत्याऽसकृत्प्रथमकैङ्कर्यभूतश्रीभाष्यप्रवचनसमेधितामन्दा — नन्दतुन्दिलमनास्तत्प्रीतिपरीवाहात्मना श्रीभाष्यकारस्य यतिराजस्य स्तुतौ "मौनद्रुहो मुखरयन्ति गुणास्त्वदीयाः" इति न्यायेन तद्गुणपरवशतया प्रविवृत्सुः कवितार्किकसिंहः सर्वतन्त्रस्वतन्त्रः श्रीमद्वेङ्कटनाथनामा श्रीमन्निगमान्तमहादेशिकः श्रीभाष्यादिप्रति-

---

देशिक द्वारा विरचित जनमनोमोहक ग्रन्थों की सर्व साधारण के उपकार के लिये हिन्दी तथा संस्कृत में व्याख्या करता है ॥७॥

भगवान् श्रीवेदान्तदेशिक स्वामी जी महाराज ने आत्रेय रामानुजाचार्य की सेवा कर उनके अनुग्रह से बीस वर्षों में ही वेद वेदान्त इत्यादि सभी विद्याओं में दिव्य ज्ञान प्राप्त किया। तभी तो आपने स्वयं कहा कि "विंशत्यब्दे विश्रुतनानाविधविद्यः"। आपने जब श्रीरङ्ग में प्रतिवादियों को परास्त कर श्रीरङ्गनाथ भगवान् के कैङ्कर्य को अबाधित रूप में चलाने में सहायता की, उस समय विद्वन्मण्डली ने आपको "कवितार्किकसिंह" बिरुद से सम्मानित किया, श्रीरङ्गनाथ भगवान् ने अपना असाधारण "वेदान्ताचार्य" पद देकर अनुगृहीत किया तथा श्रीरङ्गनायिका ने "सर्वतन्त्र स्वतन्त्र" पदवी से विभूषित किया। तबसे श्रीवेदान्तदेशिक स्वामी जी महाराज "कवितार्किकसिंह सर्वतन्त्र स्वतन्त्र वेदान्ताचार्य" नाम से प्रसिद्ध हुये। श्रीदेशिक स्वामी जी महाराज ने अपनी आयु में कम से कम तीस बार श्रीभाष्य का प्रवचन किया। प्रत्येक प्रवचन में

पादितार्थानां भगवन्तमारभ्याविच्छिन्नसंप्रदायप्राप्ततां सूचयितुं भगवन्तमारभ्य श्रीभाष्यकारपर्यन्तां गुरुपरम्परामनुसन्धत्ते दशभिः श्लोकैः। तत्र प्रथमगुरुभूतं श्रीमन्नारायणं प्रथमतो नमस्करोति —

**कमप्याद्यं गुरुं वन्दे कमलागृहमेधिनम्।**
**प्रवक्ता छन्दसां वक्ता पञ्चरात्रस्य यः स्वयम् ॥१॥**

*कमप्याद्यं गुरुं — कमपि = अनिर्वाच्यं, स्वरूपरूपगुणविभूत्यादिभिरयमित्थंभूत इति परिच्छेद्य निर्देष्टुमशक्यम्, आद्यम्

---

परीवाह के रूप में श्रीभाष्यकार स्वामी जी के विषय में "यतिराज सप्तति" नामक एक स्तोत्र का निर्माण किया। इस स्तोत्र के आरम्भ में आपने श्रीभगवान् से लेकर श्रीभाष्यकार पर्यन्त गुरुपरम्परा की वन्दना की। श्रीभाष्यादि ग्रन्थों से प्रतिपादित उत्तमोत्तम सिद्धान्तार्थ श्रीभगवान् से लेकर अविच्छिन्न सम्प्रदाय द्वारा प्राप्त होने से परम प्रामाणिक तथा अत्यन्त श्रद्धेय हैं। इस बात को सूचित करने के लिये भी स्तोत्रारम्भ में श्रीदेशिक स्वामी ने श्रीभगवान् से लेकर श्रीभाष्यकार पर्यन्त गुरु परम्परा की वन्दना की। इस वन्दना के प्रसङ्ग में सर्व प्रथम श्रीसम्प्रदाय के प्रथम आचार्य श्रीभगवान् की वन्दना प्रथम श्लोक से करते हैं—

*यः* = जो, *छन्दसां* = वेदों के, *प्रवक्ता* = प्रवक्ता तथा, *स्वयं* = स्वयं, *पञ्चरात्रस्य* = पञ्चरात्र आगम के, *वक्ता* = वक्ता हैं, उन, *कमलागृहमेधिनम्* = लक्ष्मीपति, *आद्यं गुरुं* = आदि गुरु, *कमपि* = अनिर्वचनीय शक्तिशाली भगवान् नारायण को, *वन्दे* = नमस्कार करता हूँ।

"कमप्याद्यं गुरुं वन्दे"—श्रीदेशिक स्वामी जी महाराज कहते हैं कि मैं प्रथम गुरु श्रीभगवान् की वन्दना करता हूँ। श्रीभगवान् गुरु हैं

प्राथमिकम्, गुरुम् = अज्ञानान्धकारनिरोधकमाचार्यम् । सृष्ट्यादौ ब्रह्मणे वेदप्रदानादाद्यगुरुरित्युच्यते । अथवा श्रीशठकोपादि-प्रवर्तितसंप्रदायस्य प्रथमगुरुरित्याशयेनाद्यगुरुरित्युच्यते । स आद्य-गुरुः क इत्यत्राह * कमलागृहमेधिनमिति — लक्ष्मीपतिमित्यर्थः । अनेन आद्यगुरुर्लक्ष्मीपतिरित्युक्तं भवति । अनेन लोके यथा गृहिण्या अभावे गृहस्थस्य गृहेयोगक्षेमौ न सिध्यतः, तथा सर्वेश्वरस्य कमलाया अभावे प्रपञ्चयोगक्षेमौ न सिध्यत इति सूचितं भवति । गृहैर्दारैर्मेधते संगच्छत इति गृहमेधी गृहस्थ इत्यर्थः ।

तस्य गुरुत्वं विव्रियते उत्तरार्धेन * यश्छन्दसां प्रवक्ता — यः श्रियः पतिः वेदानां केवलं प्रवचनकर्ता, नतु निर्माता ।

---

क्योंकि उन्होंने अज्ञानान्धकार को दूर किया । वे प्रथम गुरु हैं क्योंकि सृष्टि के आरम्भ में उन्होंने ब्रह्माजी को वेद प्रदान किया तथा श्रीशठ-कोपादि प्रवर्तित श्रीसम्प्रदाय का प्रथम प्रवर्तन किया । वे श्रीभगवान् कैसे हैं ? "कमपि" वे अनिर्वाच्य हैं । स्वरूप, रूप, गुण, विभूति, आदि किसी में भी "वे ऐसे हैं इतने हैं" ऐसा नहीं कहा जा सकता । अतः वे अनिर्वाच्य हैं । अच्छा, वे कौन हैं ? "कमलागृहमेधिनम्" । वे लक्ष्मीपति हैं । श्रीमहालक्ष्मी जी के सहयोग से ही श्रीभगवान् संपूर्ण जगद्व्यापार को निभाने वाले हैं । जिस प्रकार धर्मपत्नी के सहयोग न होने पर गृहस्थ घर के योगक्षेम को नहीं चला सकता, ठीक उसी प्रकार श्रीभगवान् भी श्रीमहालक्ष्मी जी के सहयोग के विना सृष्टि स्थिति प्रलय और मोक्ष प्रदान इत्यादि प्रपञ्च योगक्षेम को नहीं चला सकते क्योंकि श्रीभगवान की पराशक्ति श्रीमहालक्ष्मी जी हैं ।

श्रीभगवान् ने कौनसा ऐसा काम किया जिससे वे प्रथम गुरु कहलाये ? "प्रवक्ता छन्दसां वक्ता पञ्चरात्रस्य यः स्वयम्" श्रीभगवान् ने

वेदानां नित्यत्वात्। स श्रियः पतिः सृष्ट्यारम्भे ब्रह्मणे पूर्वकल्पस्थवेदानां यथापूर्वं प्रवचनमात्रमकरोत् "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति श्रुतेः।* यः पञ्चरात्रस्य स्वयं वक्ता—यः श्रियःपतिः पञ्चरात्रागमस्य स्वयं वक्ता निर्माता। अत्र प्रवक्ता तत्र वक्तेति निर्देशेन ईश्वरस्य वेदविषयेऽध्यापकत्वं पञ्चरात्रविषये कर्तृत्वं च प्रतीयते। स्वयं वक्ता न तु ऋष्यादिद्वारेत्यर्थः। अनेन ऋष्यादिप्रणीतस्मृतिपुराणाद्यपेक्षया स्वयं भगवत्प्रणीतस्य श्रीपञ्चरात्रस्य प्रामाण्यं प्रकृष्यत इति व्यज्यते। अथवा, स्वयं स्वासाधारणाकारेण, नतु बौद्धादिमतवत् तामसजीवाधिष्ठानद्वारेत्यर्थः। अनेन तामसजीवाधि-

---

ऐसे दो कार्य किये, उससे वे प्रथम गुरु कहलाये। (१) उन्होंने सृष्टि के आरम्भ में ब्रह्मा जी के लिये पूर्व कल्पस्थ वेदों का प्रवचन किया। (२) श्रीपञ्चरात्र शास्त्र को उन्हों स्वयं निर्माण कर नारदादि महर्षियों को उपदेश दिया। इसलिये वे प्रथम गुरु कहलाये।

वेद और पञ्चरात्र में यह अन्तर है कि श्रीभगवान् ने वेदों का प्रवचन भर किया, निर्माण नहीं किया, क्योंकि वेद नित्य अपौरुषेय हैं। पञ्चरात्रका श्रीभगवान् ने निर्माण किया है। वह निर्माण भी श्रीभगवान् ने स्वयं किया न कि किसी जीव पर अधिष्ठान कर। किसी तामस जीव पर अधिष्ठान कर श्रीभगवान् ने बौद्धागम का निर्माण किया। अतएव बौद्धागम अप्रमाण हो गया। वैसे श्रीभगवान ने किसी जीव पर अधिष्ठान कर श्रीपञ्चरात्र को नहीं बनाया किन्तु स्वयं बनाया। अतएव श्रीपञ्चरात्र परम प्रमाण माना जाता है। किंच, श्रीभगवान् ने महर्षियों के द्वारा स्मृति पुराण आदि का निर्माण कराया। वैसे महर्षियों के द्वारा श्रीपञ्चरात्र शास्त्र का निर्माण नहीं कराया। किन्तु स्वयं

ष्ठानद्वारा प्रवर्तिताद् बौद्धागमात् स्वयं प्रणीतस्य श्रीपञ्च-रात्रस्य वैशेष्यं सूचितं भवति।

*वन्दे — नमस्करोमीत्यर्थः । इत्थं महोपकारं कृतवतो विषयेऽनमस्कृत्य स्थातुं न शक्यते। अतो नमस्करोमि, नतु प्रत्युपकारबुद्ध्या नमस्करोमीति भावः। एवमग्रिमश्लोकेष्वपि द्रष्टव्यम्। अत्र गुरुं वन्दे इति निर्देशेन वन्दनीयत्वे प्रयोजकं गुरुत्वमेव न तु परदेवतात्वम्। परदेवतात्वमात्रे सति अज्ञाना-वृतस्य लोकस्य स्वरूपकृतदास्यमात्रवहनं हि स्यात्। गुरुत्वे सति तु अज्ञानान्धकारस्य नाशाद्गुणकृतदास्यवहनमपि भवतीति सूच्यते । अत्राविघ्नपरिसमाप्त्यर्थं इष्टदेवतानमस्कारात्मकं मङ्गलं कृतमिति वेदितव्यम् ॥१॥

---

निर्माण किया। अतएव महर्षि कृत ग्रन्थों की अपेक्षा श्रीपञ्चरात्र का अधिक प्रामाण्य है।

श्रीभगवान् में दो विशेषतायें हैं। (१) श्रीभगवान् पर देवता हैं अर्थात् श्रेष्ठ देवता हैं। (२) श्रीभगवान् प्रथम गुरु हैं। यदि श्रीभगवान् केवल पर देवता ही होते और गुरु न होते तो अज्ञानान्धकार से आवृत जीवों को कुछ भी लाभ नहीं होता। जब श्रीभगवान ने पर देवता भाव के साथ गुरु भाव धारण कर सृष्टि के आरम्भ में ब्रह्माजी को वेदों का उपदेश दिया, स्वयं श्रीपञ्चरात्रागम को निर्माण कर नारदादि ब्रह्मर्षियों को उपदेश किया, तब से जीव स्वस्वरूप और परस्वरूप को समझकर कल्याणपथ में अग्रसर होने लगे। इस प्रकार श्रीभगवान् ने गुरु भाव में आकर जीवों के अज्ञानान्धकार को दूर कर ज्ञान चक्षु प्रदान किया। इस महोपकार का स्मरण कर श्रीभगवान् के चरणों में प्रणत होने की इच्छा होती है इसलिये प्रणाम करता हूँ। प्रणाम को प्रत्युपकार मानकर नहीं, क्योंकि मैं तो नित्य ऋणी हूँ ॥१॥

प्रथमश्लोके श्रीसंप्रदायस्य प्रथमगुरुं श्रीभगवन्तं नमस्कृत्य अस्मिन् द्वितीयश्लोके श्रीसंप्रदायस्य द्वितीयगुरुं महालक्ष्मीं नमस्करोति—

**सहधर्मचरीं शौरेः सम्मन्त्रितजगद्धिताम् ।**
**अनुग्रहमयीं वन्दे नित्यमज्ञातनिग्रहाम् ॥२॥**

*शौरेः सहधर्मचरीं वन्दे—जगद्व्यापारशरणागतरक्षण-प्रभृतयः शौरेर्धर्माः, तान् शौरिणा सहाचरन्तीं महालक्ष्मीं वन्दे इत्यर्थः। इयं धर्माचरणे सदा भगवता सहैव वर्तते न तु क्षणमात्र-

---

प्रथमश्लोक से श्रीसम्प्रदाय के प्रथमगुरु श्रीभगवान् को प्रणाम कर श्रीदेशिक स्वामी जी महाराज इस दूसरे श्लोक से श्रीसम्प्रदाय के द्वितीय गुरु श्रीमहालक्ष्मी जी को प्रणाम करते हैं—

*नित्यमज्ञातनिग्रहाम्*—जो निग्रह करना जानती ही नहीं, *अनुग्रहमयीं*—सदा अनुग्रह करने वाली हैं, तथा, *सम्मन्त्रितजगद्धिताम्*—जगत के कल्याण की मन्त्रणा करने वाली हैं, *शौरेः*—भगवान् को, *सहधर्मचारिणीं*—सहधर्मचारिणी उन लक्ष्मी जी की, *वन्दे*—वन्दना करता हूँ।

शौरेः सहधर्मचरीं वन्दे—अर्थात् श्रीभगवान् की सहधर्मचारिणी महालक्ष्मी जी की वन्दना करता हूँ। सहधर्मचारिणी उस स्त्री को कहते हैं जो पति के साथ धर्माचरण करती है। यहाँ पर श्रीभगवान् के साथ श्रीमहालक्ष्मी जी धर्माचरण करती हैं, इसलिये श्रीभगवान् की सहधर्मचारिणी कहलाती हैं। जगत की सृष्टि स्थिति प्रलय करना शरणागत जीवों की रक्षा करना इत्यादि ये सब कार्य श्रीभगवान् के धर्म हैं। इन सब कार्यों को श्रीलक्ष्मी जी श्रीभगवान् के साथ करती हैं। इन धर्मों के आचरण के समय श्रीमहालक्ष्मी जी कभी भी श्रीभगवान् को

ष्ठानद्वारा प्रवर्तिताद् बौद्धागमात् स्वयं प्रणीतस्य श्रीपञ्च-रात्रस्य वैशेष्यं सूचितं भवति ।

*वन्दे — नमस्करोमीत्यर्थः । इत्थं महोपकारं कृतवतो विषयेऽनमस्कृत्य स्थातुं न शक्यते । अतो नमस्करोमि, नतु प्रत्युपकारबुद्ध्या नमस्करोमीति भावः । एवमग्रिमश्लोकेष्वपि द्रष्टव्यम् । अत्र गुरुं वन्दे इति निर्देशेन वन्दनीयत्वे प्रयोजकं गुरुत्वमेव न तु परदेवतात्वम् । परदेवतात्वमात्रे सति अज्ञाना-वृतस्य लोकस्य स्वरूपकृतदास्यमात्रवहनं हि स्यात् । गुरुत्वे सति तु अज्ञानान्धकारस्य नाशाद्गुणकृतदास्यवहनमपि भवतीति सूच्यते । अत्राविघ्नपरिसमाप्त्यर्थं इष्टदेवतानमस्कारात्मकं मङ्गलं कृतमिति वेदितव्यम् ॥१॥

---

निर्माण किया । अतएव महर्षि कृत ग्रन्थों की अपेक्षा श्रीपञ्चरात्र का अधिक प्रामाण्य है ।

श्रीभगवान में दो विशेषतायें हैं । (१) श्रीभगवान् पर देवता हैं अर्थात् श्रेष्ठ देवता हैं । (२) श्रीभगवान् प्रथम गुरु हैं । यदि श्रीभगवान् केवल पर देवता ही होते और गुरु न होते तो अज्ञानान्धकार से आवृत जीवों को कुछ भी लाभ नहीं होता । जब श्रीभगवान ने पर देवता भाव के साथ गुरु भाव धारण कर सृष्टि के आरम्भ में ब्रह्माजी को वेदों का उपदेश दिया, स्वयं श्रीपञ्चरात्रागम का निर्माण कर नारदादि ब्रह्मर्षियों को उपदेश किया, तब से जीव स्वस्वरूप और परस्वरूप को समझकर कल्याणपथ में अग्रसर होने लगे । इस प्रकार श्रीभगवान ने गुरु भाव में आकर जीवों के अज्ञानान्धकार को दूर कर ज्ञान चक्षु प्रदान किया । इस महोपकार का स्मरण कर श्रीभगवान् के चरणों में प्रणत होने की इच्छा होती है इसलिये प्रणाम करता हूँ । प्रणाम को प्रत्युपकार मानकर नहीं, क्योंकि मैं तो नित्य ऋणी हूँ ॥१॥

रामस्यातिशयमिव "अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा" "अनन्या राघवेणाहं भास्करेण प्रभा यथा" इति वर्णयन् श्रीसीतासम्बन्धेन श्रीरामस्यातिशयं श्रीरामसम्बन्धेन श्रीसीतायाश्चातिशयं वर्णयति तथैवात्र श्रीकवितार्किकसिंहोऽपि "कमलागृहमेधिनम्" सहधर्मचरीं शौरेः" इति लक्ष्म्या भगवन्तं भगवता च लक्ष्मीं निरूपयन् लक्ष्मीसम्बन्धनिबन्धनं भगवतोऽतिशयं भगवत्सम्बन्धनिबन्धनं च लक्ष्म्या अतिशयं व्यनक्ति।

---

से श्रीलक्ष्मण जी का महत्व तथा श्रीलक्ष्मणजी के सम्बन्ध से श्रीरामजी का महत्व व्यक्त किया गया।

कीदृशीं सहधर्मचारीमित्यत्राह * नित्यमज्ञातनिग्रहामिति—वात्सल्यातिशयात् अज्ञातनिग्रहहेतुम्, अज्ञातनिग्रहस्वरूपां वा। कदाचिद्भगवतो निग्रहसंकल्पः उदियादपि, अस्यास्तु कदाचिदपि निग्रहसंकल्पो नोदेति। यतस्सा परमवात्सल्यमयी।

पुनः कीदृशीमित्यत्राह * अनुग्रहमयीमिति। अनुग्रहप्रचुरामित्यर्थः प्राचुर्यार्थे मयट्। यद्वा अनुग्रहस्वरूपाम्, मूर्तिमदनुग्रहरूपामित्यर्थः।

पुनः कीदृशीमित्यत्राह * संमन्त्रितजगद्धितामिति। समित्येकीभावे। भगवता सह एकीभूय जगद्धितविचारं कुर्वाणा

---

श्रीमहालक्ष्मी जी में निग्रह की भावना तक नहीं है। अतः वह जीवों पर निग्रह कैसे कर सकती है? इतना ही नहीं निग्रह के कारण तो अपराध होते हैं, इन अपराधों पर उनका ध्यान ही नहीं जाता। जीवों के अपराधों को वे बच्चों का खेल समझती हैं। ऐसी महालक्ष्मी जी जीवों पर निग्रह करें कैसे? अतः महालक्ष्मी जी "अज्ञात निग्रहा" है। इसमें सन्देह नहीं है।

प्रश्न यह होता है कि जिस प्रकार श्रीमहालक्ष्मी जी निग्रह करना नहीं जानतीं वैसे ही अनुग्रह करना भी नहीं जानती होंगी। इस प्रश्न के उत्तर में श्रीस्वामी जी महाराज कहते हैं कि "अनुग्रहमयीम्" अर्थात् श्रीमहालक्ष्मी जी जगन्माता होने के कारण अनुग्रहमयी हैं, अनुग्रह से परिपूर्ण हैं। ऐसा प्रतीत होता है कि अनुग्रह ही मानों श्रीमहालक्ष्मी जी के रूप में प्रकट हुआ हो।

अनुग्रहमयी श्रीमहालक्ष्मी जी जीवों पर कैसा अनुग्रह करती हैं? इस प्रश्न के उत्तर में श्रीस्वामी जी महाराज कहते हैं कि "सम्मन्त्रित जगद्धिताम्" अर्थात अनुग्रहमयी होने के कारण ही श्रीमहालक्ष्मी जी

मित्यर्थः। तदा तदा बहुविधेषु जगद्धितमन्त्रणेषु कृतेषु सत्स्वपि अत्र जगद्धितमन्त्रणविशेषे तात्पर्यम्। स चेत्थं भाव्यः। पूर्वश्लोकोक्तरीत्या वेदे पाञ्चरात्रे च प्रवर्तिते सत्यपि तयोरपार्थान् कल्पयित्वा दिव्यदम्पती जगत्कारणत्वेनाज्ञात्वाऽधोगतिं प्राप्नुवत्सु जीवेषु, एतेषामधोगतिं दृष्ट्वा दिव्यदम्पत्योर्दयाया-

---

श्रीभगवान् से मिलकर मन्त्रणा करती हैं कि कैसे और क्या करने पर जगत का हित होगा? इन मन्त्रणाओं में अन्त में श्रीभगवान् और महालक्ष्मी जी का एक ही मत होता है कभी भी मतभेद नहीं होता। इस प्रकार श्रीभगवान् के साथ जगद्धित की मन्त्रणा करने के बाद उसे अनुष्ठान में लाती हैं। तीनों कालों में जगत में जितने प्रकार के हित सम्पन्न होते हैं वे सबके सब श्रीभगवान् तथा श्रीमहालक्ष्मी जी की मन्त्रणा का ही फल हैं, क्योंकि इनके संकल्प के बिना जगत में कुछ भी नहीं हो सकता है। अन्यान्य प्रसङ्गों में भले श्रीमहालक्ष्मी जी से भिन्न २ मन्त्रणायें की गई हों, यहाँ पर तो श्रीगुरुपरम्परा के प्रणाम के प्रसङ्ग में श्रीस्वामी जी महाराज को एक विलक्षण मन्त्रणा अभिप्रेत है। वह यह है—

मुदितायां कुरुकापुर्यां दिव्यसूरौ चावतीर्णे दिव्यदम्पत्योरेवं मन्त्रणा प्रववृते।

श्रीभगवान्—प्रिये, अधुना भूतलेऽवतीर्णस्य शठकोपसूरेर्द्वारा वेदार्था यथावद्विशदीकर्तुं शक्यन्ते किल।

श्रीमहालक्ष्मी—शक्यन्ते। अयं समीचीन एवोपायः। किं तु अधुनाऽऽवाभ्यां समक्षमुपस्थाय "आवामेव जगत्कारणम्, आवामेव वेदप्रतिपाद्यौ" इति साक्षादुपदेशे क्रियमाणेऽयमतिशंकेत यदिमौ स्वयमेत्य स्वप्रशंसां कुरुतः,

---

समझकर अनादि दुर्वासना से विपरीत आचरण कर जीव गण अधोगति को प्राप्त होते गये। जीवों की इस दुर्दशा को देखकर दिव्य दम्पती के मन में दया आई। तब उन दोनों ने सोचा कि किसी तरह इन जीवों का उद्धार होना चाहिये। उस समय श्रीमहालक्ष्मी जी तथा श्रीभगवान् में जो मन्त्रणा हुई वह इस प्रकार है—

श्रीभगवान्—प्रिये ! इस समय भूलोक में श्रीशठकोप सूरि जी का अवतार हो गया है। मैं चाहता हूँ कि उनके द्वारा वेदार्थों का विशद निरूपण कराया जाय।

श्रीमहालक्ष्मी जी—नाथ ? उपाय अत्युत्तम है इनके द्वारा वेदार्थों का प्रचार किया जा सकता है। परन्तु कठिनायी यह है कि इनको उपदेश कौन दे। यदि हम दोनों इनको दर्शन देकर उपदेश दें कि हम दोनों ही जगत के आदि कारण हैं हम दोनों का आश्रय लेना ही परमहित है हम दोनों को प्राप्त करना ही परम पुरुषार्थ है। इस प्रकार के उपदेश को सुनते ही इनके मन में शङ्का होने लगेगी कि ये

कथमिदं प्रमाणं स्यादिति । अत आत्मान्यानुपदेशनं न सांप्रतं मन्ये ।

श्रीभगवान्—तर्हि अथापि विष्वक्सेनोऽपि नैव एव । तदुभाभ्यामेव उपदिश्यताम् ।

श्रीमहालक्ष्मी—युज्यते ।

श्रीभगवान्—तर्हि भवती मया भवत्यै उपदिष्टानर्थान् वक्तु

---

लक्ष्मीतन्त्रे चोपदिष्टांश्चार्थान् विष्वक्सेनायोपदिश्य तम् एतदुपदेशार्थं नियुङ्क्ष्वाम् । एतन्मन्त्रणानुरोधेन महालक्ष्मी- र्विष्वक्सेनाय उपदिश्य तं सूर्युपदेशाय प्रेरयामास ।

*सम्मन्त्रितजगद्धितां शौरेः सहधर्मचरीं वन्दे—इत्थं श्रीभगवता संमन्त्र्य जगद्धिताय श्रीविष्वक्सेनप्रेरणरूप- महोपकारस्य करणात् तदनुसन्धानेनोन्मिषन्त्या कृतज्ञतया प्रणाममकृत्वा स्थातुमशक्यत्वाद् महालक्ष्मीं प्रणमामि, न तु प्रत्युपकारबुद्ध्येति भावः ॥२॥

इत्थं द्वाभ्यां श्लोकाभ्यां श्रीसम्प्रदायस्य प्रथमद्वितीय गुरू

---

दिया, तथा आप ने श्रीलक्ष्मी तन्त्रादि में जिन अर्थों को प्रकाशित किया, उन सभी अर्थों को श्रीविष्वक्सेन जी को उपदेश कर आप श्रीशठकोप सूरि को उपदेश देने के लिये श्रीविष्वक्सेन जी को प्रेरित करें।

इस मन्त्रणा के अनुसार श्रीमहालक्ष्मी जी ने विष्वक्सेन जी को सर्वार्थों का उपदेश देकर श्रीशठकोप सूरि जी को उपदेश देने के लिये भेजा। उन्होंने भी वैसा ही किया। इस मन्त्रणा विशेष को मन में रख कर श्री स्वामी जी महाराज कह रहे हैं कि—"संमन्त्रितजगद्धिताम्"। इस प्रकार जगद्धितकारी श्रीविष्वक्सेन प्रेरणा रूपी महोपकार करने वाली श्रीमहालक्ष्मी जी के विषय में प्रणाम किये बिना रहा नहीं जाता अतः उनको प्रणाम करता हूँ ॥२॥

श्रीदेशिक स्वामी जी ने प्रथम श्लोक में श्रीसम्प्रदाय के प्रथमाचार्य श्रीमन्नारायण भगवान को प्रणाम किया है। द्वितीय श्लोक में श्रीसंप्रदाय के दूसरे आचार्य श्रीमहालक्ष्मी जी को प्रणाम किया है। अब तीसरे

नमस्कृत्यानेन तृतीयश्लोकेन तृतीयगुरुं श्रीविष्वक्सेनं नमस्यति—

**वन्दे वैकुण्ठसेनान्यं देवं सूत्रवतीसखम् ।**
**यद्वेत्रशिखरस्पन्दे विश्वमेतद् व्यवस्थितम् ॥३॥**

*देवम्—"यत्रपूर्वेसाध्याः सन्तिदेवाः" इत्युक्तरीत्या नित्यसूरिं *वैकुण्ठसेनान्यम्—वैकुण्ठस्य श्रीभगवतः सेनापतिम् । सेनान्यमित्युक्तौ देवसेनापतेः कार्तिकेयस्य प्रतीतिः स्यादिति तद्व्यावृत्तये वैकुण्ठसेनान्यमित्युक्तिः । एवंभूतं विष्वक्सेनं *वन्दे—अभिवादये । श्रीशठकोपसूरये मन्त्रमन्त्रार्थाद्युपदेशरूप-

---

श्लोक में श्रीसम्प्रदाय के तीसरे आचार्य श्रीविष्वक्सेन जी को प्रणाम करते हुये कहते हैं—

*यद्वेत्रशिखरस्पन्दे*—जिनके वेत्राग्र के संचालन मात्र से, *एतत् विश्वम्*—यह सम्पूर्ण चराचर जगत्, *व्यवस्थितम्*—अपनी मर्यादा में स्थित रहता है। तं *सूत्रवतीसखम्*—उन सूत्रवती के स्वामी, *वैकुण्ठसेनान्यम्*—वैकुण्ठ के सेनापति, *देवम्*—देव को, *वन्दे*—नमस्कार करता हूँ।

महोपकारकरणात् तादृशमहोपकारेऽनुसंहिते एतद्विषयेऽप्रणम्य-स्थातुमशक्ततया प्रणमामि, ननूपकारबुद्ध्येति भावः। कीदृशं-वैकुण्ठसेनान्यमित्यत्राह *सूत्रवतीसखम्—सूत्रवत्या भर्तारम्। सूत्रवतीति श्रीविष्वक्सेनभार्याया नाम। अत्र पत्नीविशिष्टं सेनापतिं नमस्कुर्वतः कोभाव इति चेत् अयं भावः—

श्रीमद्रामायणे वर्ण्यते यत् श्रीभरते चित्रकूटात् श्रीरामप्रत्यानयनाय यात्रायां सैनिकान् सहगमनार्थमादिष्टवति सति योधाङ्गनाः भर्तॄन् प्रेरयामासुरिति तथा च श्लोकः—

ततो योधाङ्गनाः सर्वाः भर्तॄन् सर्वान् गृहे गृहे।

---

हुआ। इस महोपकार का अनुसन्धान करने पर उनके चरणों में नतमस्तक हुए विना नहीं रहा जाता, अतः उनको प्रणाम करता हूँ।

श्री विष्वक्सेन महाराज कैसे हैं ? इस प्रश्न के उत्तर में कहते हैं "सूत्रवतीसखम्"—वे सूत्रवती के भर्ता हैं। मैं सूत्रवतीदेवी से युक्त श्रीविष्वक्सेन महाराज को प्रणाम करता हूँ क्योंकि जगदुद्धार में श्रीसूत्रवतीदेवी का भी कम हाथ नहीं है, उन्होंने इस काम में बहुत कुछ हाथ बँटाया है।

यहाँ पर यह वृत्तान्त ध्यान देने योग्य है कि श्रीमद्रामायण में कहा गया है कि श्रीभरतजी ने श्रीरामचन्द्रजी को चित्रकूट से अयोध्या लाने के लिये बहुत उत्सुक होकर सैनिकों को साथ चलने के लिये आदेश दिया। इस आज्ञा को सुन कर सैनिकों की स्त्रियों ने क्या किया ? इस विषय में कहा गया है कि—

"श्रीभरतजी की आज्ञा से अपने पतिदेवों की चित्रकूट यात्रा

यात्रागमनमाज्ञाय त्वरयन्ति स्म हर्षिताः ॥ इति ।

तथैवात्रापि श्रीशठकोपसूरिद्वारा वेदार्थान् यथावत् प्रकाश्य जीवा उज्जीवनीयाः तदर्थं तस्मै मन्त्रमन्त्रार्थान् उपदिशेति महालक्ष्म्यां श्रीविष्वक्सेनमाज्ञापयन्त्यां सत्यां तामाज्ञां श्रुत्वा सूत्रवती लोकोज्जीवनार्थं हर्षप्रकर्षेण श्रीविष्वक्सेनं त्वरयामास । एतमर्थमभिसन्धाय कृतज्ञतया सूत्रवती सहितं श्रीविष्वक्सेनं प्रणमन्ति आचार्याः ।

---

को जानकर सभी सैनिकों की स्त्रियाँ घर घर में अपने अपने पतियों को शीघ्र चलने के लिये प्रेरित करने लगीं।" यह बात श्रीवाल्मीकि रामायण में कही गयी है ।

ननु श्रीविष्वक्सेने श्रीशठकोपसूरये उपदिश्य तद्द्वारा जीव-लोकं मुमुक्षूकृत्योज्जीवयति सति--

श्रूयते-किल गोविन्दे भक्तिमुद्वहतां नृणाम् ।
संसार न्यूनताभीतास्त्रिदशाः परिपन्थिनः ॥

इत्युक्तरीत्या देवाः किं न विघ्नमाचरेयुरिति शङ्कायामाह *यद्वेत्रशिखरस्पन्दे विश्वमेतद् व्यवस्थितम् इति । यस्य सेना-पतेर्वेत्रशिखरस्य वेत्राग्रस्य स्पन्दे किंचित् चलनमात्रे एतद्विश्वम्

---

यहाँ पर यह शङ्का होती है कि भले ही श्रीविष्वक्सेन महाराज श्रीशठकोप स्वामी जी को मन्त्र मन्त्रार्थों को उपदेश देकर जीवों का उद्धार करने के लिसे उद्योग करें किन्तु देवतागण इस पवित्र कार्य में बाधा डालेंगे तो क्या किया जाय । क्योंकि शास्त्रों में यह बात स्पष्ट रूप से कही गई है कि—

परिदृश्यमानः कृत्स्नचराचरप्रपञ्चः व्यवस्थितः आज्ञातिक्रममन्तरा स्वस्वमर्यादायां स्थितमित्यर्थः। एतद्वेत्रयष्टि शिखरभागचलनमात्रेण कृत्स्नप्रपञ्चे महाभयेन स्वस्वमर्यादायां तिष्ठति सति देवाः कथं विघ्नमाचरेयुरितिभावः ॥३॥

अथास्मिन् तुर्ये श्लोके श्रीसम्प्रदायस्य तुर्यमाचार्यं श्रीविष्वक्सेनेन मन्त्रतदर्थप्रदानेनानुगृहीतं दुरूहवेदार्थानां सर्वसुगमतया द्राविडप्रबन्धैर्विशदीकरणरूपं महोपकारं कृतवन्तं योगदशायामाविर्भूय श्रीमन्नाथमुनये तत्वार्थान् प्रबन्धांश्चोपदिष्टवन्तं महोपकारकं श्रीशठकोपसूरिं नमस्यति—

---

जो वेंत है, उसका अग्र भाग हिलते ही चेतनाचेतनात्मक यह सारा विश्व अत्यन्त भयभीत होकर अपनी अपनी मर्यादा में व्यवस्थित रहता है। इनकी आज्ञा का उल्लङ्घन करने के लिये किसी का भी साहस नहीं होता। ऐसी स्थिति में देवतागण श्रीविष्वक्सेन जी के शुभ संकल्प के विरुद्ध भला कैसे विघ्न कर सकते हैं, सर्वथा नहीं कर सकते हैं ॥३॥

यस्य सारस्वतं (तस्रो) स्रोतो बकुलामोदवासितम् ।
श्रुतीनां विश्रमायालं शठारिं तमुपास्महे ॥४॥

अत्रेदं बोध्यम् देहदार्ढ्यवन्तः पुरुषाः घर्मसंतापं सहेरन्नपि प्रकृत्यैव सुकुमाराङ्ग्यः स्त्रियः आतपाग्न्यादितप्ताः कथमपि तं संतापं न सहेरन् । एवं संतप्तास्ताः स्त्रियः कंचित् शीतलं नदीप्रवाहमभिलषन्त्यस्तदलाभान्निर्विण्णा यदा वर्तन्ते तदा कस्माच्चिदुत्तुङ्गात् पर्वतात् प्रसृते तीरप्ररूढवृक्षलतापुष्पभरसुरभिते कस्मिंश्चित् नदीप्रवाहे दृष्टिपथमुपगते ताः स्त्रियस्तस्मिन् प्रवाहे

---

उपकारों को स्मरण कर कृतज्ञता से प्रणाम करते हुए श्रीदेशिक स्वामी जी महाराज स्तुति करते हैं—

*यस्य*—जिन, *बकुलामोदवासितं*—मौलश्री की गन्ध से सुवासित, *सारस्वतं स्रोतः*—वाकप्रवाह, *श्रुतीनां विश्रमाय*—श्रुतियों के अर्थ को स्पष्ट करने के लिये, *अलं*—पर्याप्त है, *तं शठारिं*—उन शठकोप स्वामी की, *उपास्महे*—उपासना करता हूँ ।

निमज्य संतापमुपशमयेयुः श्रमपरिहारं कुर्युः कियन्तं कालं विश्रान्तिं च लभेरन्निति संभाव्यते । अयं दृष्टान्तः । दार्ष्टान्तिकस्त्वित्थम् । श्रीसंप्रदाये स्थिरप्रतिष्ठितो निष्कम्प उत्तुङ्गस्वभावः श्रीशठकोपसूरिर्गिरिराजस्थाने भाव्यः । तन्मुखोद्गतो दिव्यप्रबन्धरूपः सरस्वतीप्रवाहः नदीप्रवाहत्वेन भाव्यः । सरस्वती नाम काचिन्नदी सर्वा अपि महानद्यः सरस्वत्य एव यासां सलिलेन सरांसि पूर्यन्ते तासां प्रवाहोऽपि सरस्वतीप्रवाह इति सुवचः । श्रूयते नित्यमिति श्रुतिः अनादिनिधनोऽपौरुषेयो वेदः श्रुतिः । स्त्रीलिङ्गश्रुतिशब्दबोधिता वेदाः स्त्रीत्वेन भाव्याः ।

---

अपने सन्ताप और श्रम को दूर करती हैं तथा विश्रान्ति का अनुभव करती हैं ।

श्रुतीनां कुदृष्टिकृतान्यपार्थकल्पनानि तासां घर्माभितापाः । तादृशकल्पनाजनितं तासां "बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति" इत्युक्तं प्रतारणभयं स्त्रीणां वैयाकुलीत्वेन भाव्यम् । यथा घर्माभितप्ताः स्त्रियः शीतलं नदीप्रवाहं क्लेशापनयनार्थमन्वेषयन्ति तथैवापार्थकल्पनतप्ताः श्रुतयो यथावत् स्वार्थप्रकाशकं वाक्प्रवाहमन्वेषयन्ति । यथा ताभिः स्त्रीभिः पर्वतान्निसृतः तीररूढलतापुष्पसुरभितो महानदीप्रवाहो लभ्यते, तथा श्रुतिभिरपि गिरिसन्निभादुत्तुङ्गाच्छ्रीशठकोपसूरेरुद्गतस्तदीयबकुलमालाभिः सुरभितो दिव्यप्रबन्धरूपः सरस्वतीप्रवाह उपलभ्यते ।

---

से डरते हैं कि कहीं ये मनगढन्त अर्थ करके हमारी प्रतारणा न करें । इस प्रकार जब से वेदों के मनगढन्त अर्थ होने लगे, तब से श्रुतियों को मानो लू लग गई । इस मनगढन्त अर्थों को सुनकर श्रुतियाँ व्याकुल होती हैं । जैसा दृष्टान्त में गर्मी से सन्तप्त स्त्रियाँ अपने अनुकूल नदी प्रवाह को ढूँढती हैं वैसे ही अपार्थ कल्पना से सन्तप्त श्रुतियाँ भी अपने इष्ट अर्थ, अर्थात् सही सही वेदार्थों को ठीक ठीक बतलाने वाले वाक् प्रवाह रूपी सद्ग्रन्थों को ढूँढती हैं । जिस प्रकार दृष्टान्त में बहुत खोजने पर उन स्त्रियों को किसी उन्नत पर्वत मे निकला महा नदी प्रवाह मिलता है ठीक उसी प्रकार बहुत खोजने पर श्रुतियों को श्रीसिद्धान्त में स्थिर प्रतिष्ठित प्रतिवादियों के वाग्जालरूपी चण्डमारुत से कभी भी विचलित न होने वाले तथा उन्नत गुणों से संपन्न श्रीशठकोप सूरिजी के श्रीमुख से निकला हुआ दिव्य प्रबन्धरूपी सरस्वती कहते हैं । जिस प्रकार दृष्टान्त में वह नदी प्रवाह तीरस्थ वृक्ष लताओं के पुष्पों से सुगन्धित रहता है उसी प्रकार श्रीशठकोप स्वामी जी का वाक्प्रवाह

यथा ताः स्त्रियः स्वानुकूले तस्मिन् प्रवाहे निमज्य संतापमुपशमयन्ति श्रमं परिहरन्ति, विश्रान्तिसुखं च लभन्ते, तथैवात्रापि श्रुतयः स्वाभिमतार्थप्रतिपादके दिव्यप्रबन्धरूपे सरस्वतीप्रवाहे निमज्यार्थात् गुप्तरूपेणावस्थाय दिव्यप्रबन्धेन वैदिकार्थानां यथावल्लोके प्रकाशनात् अपार्थकल्पनजसंतापं शमयन्ति, दिव्यप्रबन्धावतारात्प्राक् बाह्यकुदृष्टिप्रचुरे लोके वैदिकार्थप्रकाशनेन जातं श्रममपनयन्ति, स्वप्रतिपिपादयिषितानां गूढगूढानामपि वैदिकार्थानां स्त्रीशूद्रपर्यन्तमपि प्रकाशनभरस्य दिव्यप्रबन्धेन स्वीकाराद्विश्रान्तिसुखं च लभन्ते।

अयमर्थोऽस्मिन् श्लोके प्रतिपाद्यते *यस्य शठकोपसूरेः

---

भी बकुल (मौलश्री) पुष्पमाला के पुष्पों की सुगन्धि से सुगन्धित रहता है क्यों कि श्रीशठकोप स्वामी बकुल मालाधारी हैं। जिस प्रकार दृष्टान्त में वे स्त्रियाँ अपने अनुकूल उस नदी प्रवाह में डूब कर स्नान करती हैं, विश्रान्ति सुख लेती हैं, उसी प्रकार दार्ष्टान्तिक में वे श्रुतियाँ अपने अभिमत अर्थों को बतलाने वाले अतएव अपने लिये अत्यन्तानुकूल दिव्य प्रबन्ध रूपी वाक् प्रवाह में डूब जाती हैं अर्थात् दिव्य प्रबन्ध में द्राविड भाषा से अपने सन्ताप को छिपाकर निवास करती हैं, दिव्य प्रबन्ध से सही सही वेदार्थों के प्रचार में आने के कारण अपने सन्ताप को दूर करती हैं जो अपार्थ कल्पना से उत्पन्न हो गया था। तथा वे अपने श्रम को दूर करती हैं सारी घबराहटों से छूट जाती हैं, स्त्री शूद्रों तक वेदार्थों को प्रचारित करने के भार को दिव्य प्रबन्धों में सौंपकर विश्रान्ति सुख लेती हैं।

*वकुलामोदवासितं वकुलपुष्पसुगन्धसुरभितं *सारस्वतं स्रोतः सरस्वतीप्रवाहो दिव्यप्रबन्धरूपो वाक्प्रवाहः। सारस्वतस्रोतः शब्देन नदीप्रवाहोऽपि श्लेषेण प्रतिपाद्यते *श्रुतीनां वेदानां *विश्रमाय विश्रान्त्यर्थं तापश्रमपरिहारार्थम् *अलम् पर्याप्तम् तं शठारिं शठानां वेदापार्थकल्पकानां कुदृष्टीनां शत्रुं श्रीशठकोपसूरिम् *उपास्महे भजामः। पूजायां बहुवचनेन स्वस्यैवंविधभाग्योदयेनाभिनन्दनमनेवं विधानां निन्दा च गम्यते ॥४॥

अनेन श्लोकेन श्रीनाथमुनिं नमस्यति—

**नाथेन मुनिनाथेन (तेन) भवेयं नाथवानहम्।**
**यस्य नैगमिकं तत्त्वं हस्तामलकतां गतम् ॥५॥**

---

यहाँ पर श्रीशठकोप सूरि को शठारि कहा गया है। शठारि माने शठों के शत्रु। वेदों के अपार्थ करने वाले प्रतिवादि गण शठ कहलाते हैं। श्रीशठकोपसूरि उनके शत्रु हैं। इसलिये ये शठारि कहलाये। यहाँ पर श्रीदेशिक स्वामी जी महाराज "उपास्महे" ऐसा बहुवचन प्रयोग करके श्रीशठकोप स्वामी जी की उपासना करनेवाले अपने को धन्य मानकर प्रशंसा करते हैं, श्रीशठकोप स्वामी जी की उपासना न करने वालों को अधन्य मानकर खेद प्रकट करते हैं ॥४॥

*बकुलामोदवासितं बकुलपुष्पसुगन्धसुरभितं *सारस्वतं स्रोतः सरस्वतीप्रवाहो दिव्यप्रबन्धरूपो वाक्प्रवाहः। सारस्वतस्रोतः शब्देन नदीप्रवाहोऽपि श्लेषेण प्रतिपाद्यते *श्रुतीनां वेदानां *विश्रमाय विश्रान्त्यर्थं तापश्रमपरिहारार्थम् *अलम् पर्याप्तम् तं शठारिं शठानां वेदापार्थकल्पकानां कुदृष्टीनां शत्रुं श्रीशठकोप-सूरिम् *उपास्महे भजामः। पूजायां बहुवचनेन स्वस्यैवंविध-भाग्योदयेनाभिनन्दनमनेवं विधानां निन्दा च गम्यते ॥४॥

अनेन श्लोकेन श्रीनाथमुनिं नमस्यति—

**नाथेन मुनिनाथेन (तेन) भवेयं नाथवानहम्।**
**यस्य नैगमिकं तत्त्वं हस्तामलकतां गतम् ॥५॥**

---

यहाँ पर श्रीशठकोप सूरि को शठारि कहा गया है। शठारि माने शठों के शत्रु। वेदों के अपार्थ करने वाले प्रतिवादि गण शठ कहलाते हैं। श्रीशठकोपसूरि उनके शत्रु हैं। इसलिये ये शठारि कहलाये। यहाँ पर श्रीदेशिक स्वामी जी महाराज "उपास्महे" ऐसा बहु-वचन प्रयोग करके श्रीशठकोप स्वामी जी की उपासना करनेवाले अपने को धन्य मानकर प्रशंसा करते हैं, श्रीशठकोप स्वामी जी की उपासना न करने वालों को अधन्य मानकर खेद प्रकट करते हैं ॥४॥

इस श्लोक से श्रीशठकोपसूरि जी के शिष्य श्रीमन्नाथमुनि स्वामी जी को प्रणाम करते हुये श्रीदेशिक स्वामी जी कहते हैं—

*नैगमिकं तत्त्वं*—वैदिक रहस्य, *यस्य हस्तामलकतां गतं*—जिनको हस्तामलकवत् स्पष्ट है, *तेन नाथेन मुनिना*—उन नाथमुनि से, *अहं नाथ-वान् भवेयम्*—मैं सनाथ होऊँ, यह मेरी इच्छा है।

*नैगमिकं तत्त्वम्-वेदप्रतिपाद्यं भगवत्तत्त्वम् *यस्य नाथमुनेः *हस्तामलकताम् हस्तस्थितामलकफलवत् स्पष्टदृश्यतां *गतम् प्राप्तम्। यथा "शुभां निमित्तानि शुभानि भेजिरे" इत्युक्तरीत्या हनूमति सन्निहितेऽशोकवनिकायां शुभां श्रीजानकीं शुभानि निमित्तानि अहमहमिकया भेजिरे तथा श्रीशठकोपसूरेरनुग्रहात् तद्रूपामकमेन नाथमुनिं वेदप्रतिपाद्यं परं तत्त्वं भगवत्तत्त्वं स्वयमेव दर्शनदानार्थमाससाद। अतएव भगवत्तत्त्वमस्य-

---

श्रीनाथमुनि स्वामी जी का प्रभाव अपार है क्योंकि "यस्य नैगमिकं तत्त्वं हस्तामलकतां गतम्"—वेद प्रतिपाद्य सभी अर्थों को यहाँ तक कि श्रीभगवत्तत्व को भी श्रीनाथमुनि स्वामी जी महाराज इतना स्पष्ट प्रत्यक्ष देखते थे जैसा कोई अपने हाथ पर रक्खे हुये आँवले को देखे। इसी प्रकार समस्त वेदार्थों के साक्षात्कार करने में श्रीनाथमुनि जी को अणुमात्र भी क्लेश नहीं हुआ। श्रीशठकोप स्वामी जी महाराज के अनुग्रह से "मैं इनको पहले दर्शन दूँ मैं इनको पहले दर्शन दूँ" इस

करतलामलकवद् स्पष्टदृश्यं बभूव। अहो प्रभावः श्रीमन्नाथमुनेरिति भावः *तेन नाथेन मुनिना श्रीमन्नाथमुनिना। श्रीमन्नाथमुनेः श्रीरङ्गनाथ इति पूर्णं नाम। "नामोक्तावर्धोक्तिरपि पूर्णोक्तिकार्यकरी" इति न्यायेन नाथमुनिरिति व्यवह्रियते *अहं नाथवान् भवेयम् स स्वामी भवतु अहं तस्य स्वीयवस्तु भवेयम् यथा स्वामी स्वीयवस्तुनः क्रयविक्रयदानविनिमयादौ अधिकरोति तथा नाथमुनिर्मम क्रयविक्रयदानविनिमयादौ अधिकरोति, यतस्तत्कृत उपकारो निरतिशयः। तेन लुप्ताः प्रबन्धा आविर्भाविताः भागिनेयावध्याप्य प्रचारिताश्च, यथा स्वेन दिव्यप्रबन्धाध्ययनेन नैगमिकं भगवत्तत्वं हस्तामलकवत् स्पष्टदृश्यतां नीतं स्वाधीनीकृतम्,

---

महाराज के अनुग्रह से श्रीमन्नाथ स्वामीजी ने वेद प्रतिपाद्य तत्वत्रय का साक्षात्कार कर उसी के आधार पर श्रीसिद्धान्त को स्थिर कर प्रचारित किया। यह उनका महोपकार है। इस महोपकार का अनुसन्धान कर श्रीस्वामी जी महाराज कहते हैं कि "तेन नाथेन मुनिना नाथवान् भवेयम्" मैं उस श्रीनाथमुनि स्वामी जी का वस्तु बनकर रहूँ वे मेरे स्वामी होकर रहें। लोक में देखा जाता है कि स्वामी अपनी वस्तु को बेच सकता है दान दे सकता है बदल सकता है, वैसे ही श्रीमन्नाथमुनि स्वामी जी महाराज हमको बेचें, दान में दें, बदली करें, यह सब मुझे इष्ट हैं क्यों कि उनके किये हुये उपकारों को याद करते ही प्रतीत होता है कि मेरी यह सब कुछ स्वीकृति अति तुच्छ है। भगीरथ स्वर्ग लोकस्थ गङ्गा को भूतल पर लाये। इन्होंने लुप्त दिव्य प्रबन्धों को भूलोक में प्रगट किया, यह कितना श्रम साध्य कार्य है? उन दिव्य प्रबन्धों से सम्पूर्ण वेदार्थ का साक्षात्कार कर सिद्धान्त को स्थिर किया, अपने भागिनेयों को दिव्य प्रबन्ध पढ़ाकर उनके द्वारा दिव्य प्रबन्धों को अविच्छिन्न रूप से प्रचारित

तथा दिव्यप्रबन्धप्रचारणात् भगवत्तत्वमस्मदादीनामपि हस्तामल-कतां नीतम् एवं विधे महोपकारेऽनुसंहिते नाथमुनये आत्म-समर्पणमकृत्वा स्थातुं न शक्यते मया तदीयत्वं प्रार्थ्यत इति भावः। मुनिनाथेनेति पाठे मुनीनां नाथेन नाथेनेत्यन्वयः ॥५॥

इत्थं श्रीमन्नाथमुनिं प्रणम्याथ ततः प्राप्तसर्वार्थं श्रीराममिश्रस्वामिनो वेदान्तार्थोपदेष्टारं श्रीपुण्डरीकाक्षस्वामिनं नमस्यति—

नमस्याम्यरविन्दाक्षं नाथभावे व्यवस्थितम् ।

---

कराया जिससे हम लोगों को भी वेदार्थों को सरलता से समझने में सुविधा हुई तथा भगवान् के कल्याण गुणों का अनुभव करने में सुविधा हुई। इस प्रकार उनके किये हुये उपकारों को याद करने पर मेरी आत्मा उनकी वस्तु बनकर रहने के लिये लालायित हो रही है। "मुनिनाथेन" इस पाठ में यह अर्थ है कि मुनियों के नाथ हैं श्रीनाथमुनि स्वामीजी ॥५॥

शुद्धसत्वमयं शौरेरवतारमिवापरम् ॥६॥

*अरविन्दाक्षम् श्रीपुण्डरीकाक्षस्वामिनं *नमस्यामि नमस्करोमि। श्रीपुण्डरीक्षस्वामी कथं वर्तते इत्यत्राह *शौरेर-परमवतारमिव स्थितमिति। श्रीपुण्डरीकाक्षस्वामी श्रीकृष्णस्या-परोऽवतार इव वर्तत इत्यर्थः। कथमुभयोः सादृश्यमित्यत्र त्रेधा सादृश्यं निर्वहति—

तत्र प्रथमः प्रकारो *अरविन्दाक्षम् इति। श्रीकृष्णः "तमद्भुतं बालकमम्बुजेक्षणम्" इत्युक्तेः कमलदलायतेक्षणतया पुण्डरीकाक्षः अयं तु नाम्ना पुण्डरीकाक्षः।

---

दूसरे भगवान ही हों ऐसे, *अरविन्दाक्षं*—श्रीपुण्डरीकाक्ष स्वामी जी को, *नमस्यामि*—नमस्कार करता हूँ।

"नमस्याम्यरविन्दाक्षम्—अरविन्दाक्ष और पुण्डरीकाक्ष ये दोनों शब्द समानार्थक हैं। कमलदल के समान विशाल नेत्र वाले श्री भगवान् हैं, अतः उनको पुण्डरीकाक्ष कहते हैं। वही नाम श्रीपुण्डरीकाक्ष स्वामी जी का है। उनको प्रणाम करता हूँ। वे कैसे हैं? इस प्रश्न के उत्तर में कहते हैं कि "शौरेरपरमवतारमिव (स्थितम्) अर्थात् श्रीपुण्डरी-काक्ष स्वामी जी श्री कृष्ण भगवान् के दूसरे अवतार की तरह विराजमान हैं। श्री कृष्णावतार और श्रीपुण्डरीकाक्ष स्वामी जी में कैसा सादृश्य है? इस प्रश्न के उत्तर में श्री देशिक स्वामी जी इन दोनों में तीन प्रकार का सादृश्य वर्णन करते हैं।

उनमें प्रथम प्रकार यह है कि "अरविन्दाक्षम्" दोनों ही पुण्डरीकाक्ष हैं। श्री कृष्ण भगवान तो कमल दल के समान विशाल नेत्र वाले

अथ द्वितीयः प्रकारः *नाथभावे व्यवस्थितमिति श्रीकृष्णः सर्वदा नाथभावे नाथत्वे व्यवस्थितः जगन्नाथत्वात् तस्य । अथवा नाथभावे व्यवस्थितः नाथत्वविषयेऽर्थात् राजत्वविषये पूर्वजकृत-व्यवस्थायां श्रीकृष्णोऽवर्तत । कंसवधानन्तरं स्वयं राजत्वं ग्रहीतुमधिकृतः सन्नपि यदुवंश्यानां राजत्वं नास्तीति ययातिकृत-व्यवस्थां पालयन् उग्रसेनं राजानं कृतवान् इति श्रीकृष्णो नाथ-भावे व्यवस्थितः तथाऽयं श्रीपुण्डरीकाक्षस्वाम्यपि नाथभावे

---

होने के कारण पुण्डरीकाक्ष हैं, श्री पुण्डरीक्ष स्वामी जी नाम से पुण्डरीकाक्ष हैं ।

व्यवस्थितः, नाथस्य नाथमुनेर्भावेऽभिप्रायेऽर्थादभिप्रेतार्थे व्यवस्थितः। नाथमुन्युक्तार्थान् विना स्वबुद्ध्या कमपि सिद्धान्तार्थं न कल्पितवानिति भावः। अथवा नाथभावे व्यवस्थितम् "भावज्ञेन कृतज्ञेन धर्मज्ञेन च लक्ष्मण" इत्युक्तेर्यथा श्रीलक्ष्मणः श्रीरामस्य भावं विज्ञाय तदनुरोधेन कैङ्कर्यमकरोत् तथाऽयं श्रीमन्नाथमुनेर्भावानुकूले कैङ्कर्ये व्यवस्थित इत्यर्थः। अथवा नाथभावे व्यवस्थितम् अस्मत्पौत्रस्य यामुनस्याकांक्षायामुदितायां

---

स्वामीजी भी "नाथभावे व्यवस्थित" हैं। श्रीनाथमुनि स्वामीजी का जो अभिप्राय है वह नाथभाव है, उसमें श्रीपुण्डरीकाक्ष स्वामीजी व्यवस्थित हैं अर्थात् श्रीमन्नाथमुनि स्वामीजी के अभिप्रेत अभिमत अर्थों में ही दृढ़ रहते थे। श्रीनाथमुनि स्वामीजी ने जिन अर्थों का उपदेश दिया उन अर्थों का ही उपदेश करते थे, उनके विरुद्ध किसी अर्थ को मनमाने रूप में कल्पना कर उपदेश नहीं करते थे। अतः श्रीपुण्डरीकाक्ष स्वामीजी नाथभावे व्यवस्थित कहलाते हैं। "नाथभावे व्यवस्थितम्" का दूसरा भाव यह है—श्रीनाथमुनि स्वामीजी की जो इच्छा है वह नाथभाव है। उसी श्रीनाथमुनि स्वामी जी के भाव में श्रीपुण्डरीकाक्ष स्वामी जी दृढ़ रहते थे। अर्थात् श्रीलक्ष्मण जी जिस प्रकार श्रीरामचन्द्र जी की इच्छा के अनुसार कैङ्कर्य करते थे, ठीक उसी प्रकार श्रीपुण्डरीकाक्ष स्वामी जी श्रीनाथमुनि स्वामी जी की इच्छा के अनुसार उनका कैङ्कर्य करते थे। अतः इस दृष्टि से श्रीपुण्डरीकाक्ष स्वामी जी "नाथभावे व्यवस्थित" कहलाते हैं। "नाथभावे व्यवस्थितम्" का तीसरा भाव है श्रीनाथमुनि स्वामी जी ने अपने अन्तिम समय में श्रीपुण्डरीकाक्ष स्वामी जी के सामने एक इच्छा व्यक्त की कि हमारे पौत्र श्रीयामुनार्य जी को जब श्रीवैष्णव दीक्षा लेने की इच्छा होगी उस समय आप उनको पञ्चसंस्कार

तस्मै सर्वानर्थानुपदिशेत्यादेशेन श्रीमन्नाथमुनेर्भावं विज्ञाय स्वस्यान्तिमदशापर्यन्तं प्रतीक्ष्य तस्याकांक्षाया अनुदयात् स्वशिष्यं श्रीराममिश्रं यामुनार्यस्याकांक्षामुत्पाद्य तस्मै मन्त्रमन्त्रार्थानुपदिशेत्यादिश्य परमपदमेयिवान्, श्रीपुण्डरीकाक्षाचार्यो नाथभावे व्यवस्थित इत्युच्यते। अत उक्तरीत्योभावपि नाथभावे व्यवस्थितौ इति सादृश्यम्।

---

अथ तृतीयः प्रकारः *शुद्धसत्वमयमिति श्रीकृष्णोऽप्राकृत शुद्धसत्वमयदिव्यमङ्गलविग्रहवत्वात् शुद्धसत्वमयः। श्रीपुण्डरीकाक्षाचार्योऽपि रजस्तमोऽसंस्पृष्टशुद्धसत्वगुणवत्वात् शुद्धसत्वमयः इति सादृश्यम्। अतस्त्रेधा शौरेरपरमवतारमिव स्थितं श्रीपुण्डरीकाक्षस्वामिनं नमस्यामीत्यर्थः ॥६॥

पूर्वंभगवतोऽपरावतारमिवस्थितं श्रीपुण्डरीकाक्षाचार्यं प्रणम्यानेनश्लोकेन तच्छिष्यं श्रीयामुनाचार्यस्याचार्यं श्रीराममिश्रार्यं श्रीभगवदवताराधिकमभिसन्धाय नमस्यति—

---

इस दृष्टि से विचार करने पर भी सिद्ध होता है कि श्रीपुण्डरीकाक्ष स्वामी जी "नाथभावे व्यवस्थित" हैं।

श्रीकृष्ण भगवान् और श्रीपुण्डरीकाक्ष स्वामी जी का तीसरा सादृश्य यह है—"शुद्धसत्वमयम्" श्रीकृष्ण भगवान् शुद्ध सत्वमय हैं क्योंकि उनका श्रीविग्रह अप्राकृत है शुद्ध सत्वमय है। श्रीपुण्डरीकाक्ष स्वामी जी भी शुद्ध सत्वमय हैं क्योंकि रज और तम से रहित शुद्ध सत्व गुण के निधि हैं।

इस प्रकार तीनों दृष्टियों से विचार करने पर श्रीकृष्ण भगवान् और श्रीपुण्डरीकाक्ष स्वामी जी में समता सिद्ध होती है। अतः श्रीकृष्ण भगवान् के दूसरे अवतार की तरह श्रीपुण्डरीक्ष स्वामी जी विराजमान हैं। उनको मैं श्रीकृष्ण भगवान् का अवतार मानकर प्रणाम करता हूँ। यह श्रीदेशिक स्वामी जी का कथन है ॥६॥

श्रीदेशिक स्वामी जी इस श्लोक से श्रीपुण्डरीकाक्ष स्वामी जी के शिष्य तथा श्रीयामुनाचार्य के आचार्य श्रीराममिश्र स्वामी जी को प्रणाम करते हुये कहते हैं—

**अनुज्झितक्षमायोगमपुण्यजनबाधकम् ।**
**अस्पृष्टमदरागं तं रामं तुर्यमुपास्महे ॥७॥**

*राममुपास्महे श्रीराममिश्रार्यं भजामः अयं रामः कीदृश इत्यत्राह *तुर्यमिति । अयं श्रीराममिश्रार्यश्चतुर्थो रामः । अद्य यावत् परशुरामश्रीरामबलरामा इति भगवदवतारास्त्रयो रामा अभूवन् अयं तु तेभ्योऽत्यन्तविलक्षणस्तुर्यो रामः । त्रिभ्यो रामेभ्योऽत्यन्तोत्कृष्टं चतुर्थं राममुपास्महे ।

अयं परशुरामात्प्रथमरामात् कथमुत्कृष्यते इत्यत्राह *अनुज्झितक्षमायोगम् इति । क्षमा शब्देन क्षमागुणः पृथिवी

---

*अनुज्झितक्षमायोगं*—क्षमा को कभी न छोड़ने वाले, *अपुण्यजन बाधकं*—अपुण्यजनों के बाधक, *अस्पृष्ट मदरागं*—मद-राग से शून्य, *तं*—उन, *तुर्यं रामं*—चतुर्थ राम की, *उपास्महे*—उपासना करते हैं ।

श्रीकृष्ण के सदृश श्रीपुण्डरीकाक्ष स्वामी जी को प्रणाम करने के पश्चात् उनके शिष्य तथा श्रीयामुनार्य के आचार्य श्रीराममिश्रार्य स्वामी जी को जोकि राम होते हुये भी अन्य रामों से विलक्षण हैं उनको हम भजते हैं । वे कैसे रामावतारों से विलक्षण हुये ? श्रीस्वामी जी महाराज कहते हैं कि अब तक तीन रामावतार हुये (१) परशुरामावतार (२) दाशरथि श्रीरामावतार (३) बलरामावतार । इन तीनों रामों से हमारे चौथे राम श्रीराममिश्रार्य स्वामी जी अत्यन्त विलक्षण प्रतीत होते हैं ।

पहले श्रीपरशुरामावतार से उत्कर्ष सुनिये । "अनुज्झितक्षमायोगम्" संस्कृत भाषा में क्षमाशब्द के दो अर्थ (१) क्षमागुण और (२) पृथिवी । श्रीपरशुराम जी ने क्षमागुण का त्याग कर इक्कीस बार क्षत्रियों का वध

चोच्यते । परशुरामस्त्रिःसप्तकृत्वः क्षत्रियाणां हननात् यागे पृथिव्याः काश्यपाय दानाच्च उभयथापि क्षमासम्बन्धरहितः, राममिश्रार्यस्तु नित्यं क्षमागुणवत्वात् क्षमासम्बन्धवान् । क्षमा-सम्बन्धरहितात् नित्यं क्षमावान् उत्कृष्यत इति परशुरामात् राम-मिश्रार्य उत्कृष्ट इति भावः । तर्हि "क्षमया पृथिवीसम" इत्युक्तस्य दाशरथिरामस्य सदृशोऽस्तु इत्यत्राह *अपुण्यजनबाधकम् इति ।

---

किया और यज्ञ में सारी पृथिवी काश्यप जी को दान में देकर पृथिवी सम्बन्ध को भी छोड़ दिया । इस प्रकार दोनों दृष्टियों से ही सिद्ध हुआ कि श्रीपरशुराम जी क्षमा सम्बन्ध रहित हैं । हमारे श्रीराममिश्र जी तो सर्वदा क्षमा गुण वाले हैं, कभी भी उन्होंने क्षमा गुण का परित्याग नहीं किया । अतः क्षमा का परित्याग करने वाले श्रीपरशुराम जी से क्षमा को न त्यागने वाले श्रीराममिश्र स्वामीजी विलक्षण सिद्ध होते हैं ।

इस प्रकार श्रीराममिश्र स्वामी जी की श्रीपरशुराम जी से विल-क्षणता सिद्ध होने पर भी वे श्रीरामचन्द्र जी के तो समान हो सकते हैं क्योंकि उनके विषय में श्रीवाल्मीकि महर्षि कहते हैं "क्षमया पृथिवीसमः" अर्थात् श्रीरामचन्द्र जी पृथिवी की तरह अत्यन्त क्षमावान थे । इसलिये श्रीदेशिक स्वामी जी कहते हैं "अपुण्यजनबाधकम्" संस्कृत भाषा में पुण्यजन शब्द के दो अर्थ हैं (१) राक्षस (२) धर्मात्मा सज्जन । श्रीराम-चन्द्र जी पुण्यजनों के बाधक थे क्योंकि इन्होंने रावणादि राक्षसों का वध किया, किन्तु श्रीराममिश्र स्वामी जी पुण्यजनों का अर्थात् धर्मात्मा सज्जनों के बाधक नहीं थे किन्तु अपुण्यजन अधर्मात्मा दुष्टों के ही बाधक थे । अतः पुण्यजन बाधक श्रीरामचन्द्र जी से पुण्यजनों का बाधक न बनने वाले श्रीराममिश्र स्वामी जी विलक्षण हैं ही ।

अयं श्रीराममिश्रार्यो दाशरथिरामादप्युत्कृष्यते । कुतः इत्यत आह *अपुण्यजनबाधकमिति दाशरथिरामः पुण्यजनबाधकः अयं तु अपुण्यजनबाधकः । पुण्यजनशब्दस्य द्वौ अर्थौ राक्षसो धर्मात्मा च । श्रीदाशरथिरामः पुण्यजनानां रावणप्रभृतीनां राक्षसानां बाधकत्वात् पुण्यजनबाधकः । अयं तु पुण्यजनानां धर्मात्मनां न बाधकः किं तु अपुण्यजनानां पापिनां नास्तिकानामेवबाधकः इति पुण्यजनबाधकच्छ्रीरामादपुण्यजनबाधकोऽयमुत्कृष्यते ।

अथ तर्हि बलरामस्यायं समः किं नस्यादित्यत्र ततोऽप्ययमुत्कृष्यत इत्याह *अस्पृष्टमदरागमिति । मदशब्देन मदिरा पानजन्यो मदः रागशब्देन तज्जन्यो नेत्ररक्तिमोच्यते । तथा मदशब्देन गर्वः रागशब्देन विषयराग श्चोच्यते । यादवा मदिरापायिन इति प्रसिद्धम् । अतो बलरामस्यतज्जन्यो मदस्तज्जन्योनेत्ररक्तिमा च सभाव्यत इति स मदरागस्पर्शवान् । अस्य

---

राममिश्रार्यस्य तु गर्वो विषयानुरागो वाऽणुमात्रमपि नास्तीत्ययं मदरागस्पर्शहीन इति स्पृष्टमदरागात् बलरामादस्पृष्टमदरागोऽयं चतुर्थो रामः श्रीराममिश्रार्य उत्कृष्यते। अत उक्तप्रकारेण त्रिभ्यो रामेभ्य उत्कृष्टं तुर्यं रामं तं प्रसिद्धं श्रीराममिश्रार्यमुपास्महे। आचार्याज्ञया बहुकालपर्यन्तमनुवर्त्य श्रीयामुनार्यस्याकाङ्क्षा-मुत्पाद्यायं तं श्रीवैष्णवधर्मे दीक्षयित्वाऽऽचार्यप्राचार्ययोर्मनोरथं पूरयांचक्रे इति ह्यस्य श्रीसंप्रदाये प्रसिद्धिः। *राममुपास्महे— श्रीराममिश्रार्यविषये प्रेमानुविद्धामविच्छिन्नस्मृतिसंततिमावर्त यामः। इदमावर्तनं तत्कृतमहोपकारस्य न प्रत्युपकारभूतम्

---

मिश्र स्वामी जी मद अर्थात् गर्व अर्थात् राग अर्थात् विषयानुराग से सर्वदा अछूते थे। अतः यह सिद्ध होता है कि मदराग वाले श्री बलराम जी से मदराग शून्य श्री स्वामी जी विलक्षण हैं।

इस श्लोक में श्री देशिक स्वामी जी ने तीनों रामावतारों से श्रीराम मिश्र स्वामी जी का व्यतिरेक श्लेषालङ्कार के आधार पर बतलाया है। इसके आश्रय केवल श्रीराम मिश्र स्वामी जी की प्रशंसा करना ही है न कि तीनों रामावतारों की हीनता प्रदर्शन करना।

श्री देशिक स्वामी जी आगे कहते हैं "तं रामं तुर्यमुपास्महे" इस प्रकार तीनों रामों से विलक्षण प्रसिद्ध चौथे राम को अर्थात् श्रीराम मिश्र स्वामी जी को हम भजते हैं। श्रीराम मिश्र स्वामी जी के विषय में ऐसी प्रसिद्धि है कि आपने ही आचार्य श्री पुण्डरीकाक्ष स्वामी जी की आज्ञा से बहुत काल तक श्री यामुनार्य का अनुवर्तन कर उनको श्री वैष्णव धर्म में श्रद्धा बढ़ा कर पञ्चसंस्कार सम्पन्न किया, उनके

किं तु तद्विषये स्मृत्यावर्तनमन्तरास्थातुमशक्यत्वादावर्तयामः। अत्र वन्दे नमस्यामीतिवत् उपासे इति एकवचनान्ततया प्रयोक्तव्ये उपास्महे इति बहुवचनान्तप्रयोगः, राममिश्रस्मर्तुः स्वस्यधन्यतां ध्वनयन् पूजां व्यनक्ति अनेवंकर्तृणामधन्यतामपि द्योतयति ॥ ७ ॥

पूर्वश्लोके श्रीराममिश्रार्यं प्रणम्याथास्मिन् श्लोके तच्छिष्यं श्रीमहापूर्णस्य गुरुं श्रीयामुनाचार्यं नमस्यति—

विगाहे यामुनं तीर्थं साधुवृन्दावने स्थितम्।
निरस्तजिह्मगस्पर्शे यत्र कृष्णः कृतादरः ॥८॥

---

द्वारा श्री सम्प्रदायकी अभिवृद्धि करायी। इस प्रकार महोपकार करने वाले श्रीराम स्वामी जी के विषय में प्रेममय निरन्तर स्मरण किये विना रहा नहीं जाता, अतः उनके विषय में हम निरन्तर स्मरण करते हैं प्रत्युपकार भावना से नहीं। इस प्रकार निरन्तर स्मरण करने से मैं अपने को धन्य धन्य मानता हूं। यह श्री देशिक स्वामी जी का अनुसन्धान है। इस श्लोक से श्री देशिक स्वामी जी हम लोगों के लिये यह सत् शिक्षा दे गये हैं कि श्री भगवान् से बढ़कर आचार्यों को मानना चाहिये ॥ ७ ॥

पूर्वश्लोक में श्रीदेशिक स्वामीजी महाराज श्रीराममिश्र स्वामीजी को प्रणाम कर इस श्लोक में उनके प्रिय शिष्य तथा श्रीमहापूर्ण स्वामीजी के आचार्य श्रीयामुनाचार्य स्वामीजी को प्रणाम करते हुये कहते हैं—

*यामुनं तीर्थं विगाहे यामुनतीर्थशब्दस्य द्वावर्थौ (१) यामुनाचार्यः (२) यमुनासम्बन्धिजलं च । यथा घर्माभितप्ता यमुनातीर्थेऽवगाह्य तापमुपशययन्ति शान्ति च लभन्ते तथाऽहं श्रीयामुनाचार्येऽवगाह्य निरन्तरानुसन्धानं कृत्वा संसारतापमुपशमयामि शान्ति च लभे इति भावः । यामुनजलस्य यामुनाचार्यस्य च कथं साम्यमित्यत्र द्वेधा साम्यमस्तीति श्लेषालङ्कारेण समर्थयते *साधुवृन्दावने स्थितमिति । यामुनं जलं तु श्रेष्ठे वृन्दावनक्षेत्रे स्थितम् श्रीयामुनार्यस्तु साधूनां

---

करता हूँ ) *निरस्तजिह्मगस्पर्शे यत्र*—कौटिल्य शून्य जिनके हृदय में, कृष्णः कृतादरः—श्रीकृष्ण भगवान साग्रह निवास करते हैं ।

संस्कृत भाषा में तीर्थ शब्द के दो अर्थ हैं (१) आचार्य और (२) जल । यामुनतीर्थ शब्द से यामुनाचार्य और यमुना का जल बतलाये जाते हैं । श्रीदेशिक स्वामी जी कहते हैं "यामुनं तीर्थं विगाहे"—गर्मी से संतप्त लोग जैसे यमुना जल में स्नान कर संताप को दूर करते हैं शान्ति पाते हैं, वैसे ही संसार ताप से संतप्त मैं श्रीयामुनाचार्य के अनुसन्धान में लगता हूँ संसार ताप को दूर करता हूँ तथा शान्ति पाता हूँ ।

श्रीयामुनाचार्य और यमुना जल में समता प्रदर्शित करते हुये श्रीदेशिक स्वामीजी श्लेषालङ्कार द्वारा उक्त अर्थ का समर्थन करते हैं । "साधुवृन्दावने स्थितम्" यमुना जल श्रेष्ठ तीर्थ श्रीवृन्दावन में है इसलिये उसे "साधुवृन्दावने स्थित" कहा है । श्रीयामुनाचार्य जी भी "साधुवृन्दावने स्थितं" कहे जा सकते हैं क्योंकि श्रीमहापूर्ण स्वामी इत्यादि जो शिष्यगण हैं वे साधु हैं, उन लोगों का जो समूह है वह साधुवृन्द है, उस साधुवृन्द की रक्षा करना साधुवृन्दावन है । रक्षा को अवन कहते हैं । साधुवृन्दों

श्रीमहापूर्णप्रभृतीनां महात्मनां वृन्दस्य समूहस्यावनेरक्षणे स्थितः दृढप्रतिष्ठितः। इदमेकं सादृश्यम्।

अथ द्वितीयं सादृश्यं घटयति *निरस्तजिह्मगस्पर्शे यत्र कृष्णः कृतादर इति। जिह्मगशब्देन सर्पाः कुटिलबुद्धयो रागमदादिदोषाश्चाभिधीयन्ते। निरस्तजिह्मगस्पर्शे निरस्तकालियस्पर्शे यत्र यामुनजले कृष्णः कृतादरः अत्यन्तादरवान् वर्तते इति यामुनजलविषये योजना श्रीयामुनाचार्यविषये योजना त्वित्थम्—निरस्तजिह्मगस्पर्शे श्रीयामुनाचार्यो जिह्मगानां मदरागादिदोषाणां स्पर्शमपि निरस्तवान्। चोलराजप्रत्तार्धराज्यं भुञ्जानो रागमदादिदोषा-

---

की रक्षा करने में श्रीयामुनाचार्य स्वामी जी तत्पर रहते हैं। इस दृष्टि से श्रीयामुनाचार्य को "साधुवृन्दावने स्थितम्" कहे जाते हैं।

अब दूसरा सादृश्य बताते हैं 'निरस्तजिह्मगस्पर्शे यत्र कृष्णः कृतादरः' संस्कृत भाषा में जिह्मग शब्द के तीन अर्थ हैं (१) सर्प (२) कुटिल बुद्धि वाले मनुष्य (३) मदराग इत्यादि दोष। यमुना जल में पहले कालिय सर्प रहता था, श्रीकृष्ण भगवान् ने कालिय सर्प को भगा कर यमुना जल को कालिय के स्पर्श से रहित बना दिया। इसलिये यमुना जल "निरस्त कालिय स्पर्श" कहलाता है। उस यमुना जल में श्रीकृष्णचन्द्र जी बड़े आदर के साथ विहार करते थे। इसलिये यमुना जल के विषय में "निरस्तकालियस्पर्शे यत्र कृष्णः कृतादरः" यह अर्थ सुसंगत होता है।

क्रान्तो हि यामुनार्यः श्रीराममिश्रप्रत्तालर्कपत्रभक्षणेन संजातसत्त्ववृद्धिः श्रीराममिश्राद्गीतार्थान् श्रुत्वाऽवधूतरागमदादिदोषोऽर्धराज्यमपि परित्यज्य श्रीरङ्गमेत्य संन्यस्तवानिति हि प्रसिद्धिः। अतः श्रीयामुनार्योऽपि निरस्तजिह्मगस्पर्शः किं च श्रीयामुनार्य आत्मसिद्ध्यादिप्रणयनेन कुटिलबुद्धीन् कुदृष्टीन् निरस्तवान्। अतोऽपि श्रीयामुनार्यो निरस्तजिह्मगस्पर्शः। एवं भूते यत्र यामुनार्ये कृष्णः कृतादरो वर्तते "ज्ञानी त्वात्मैव मे मतम्" इत्युक्तरीत्याऽऽदरं कुर्वाणो वर्तते।

अत्रेदं बोध्यम्—श्रीमन्नाथमुनेः पूर्वजेषु अन्यतमो महात्मा

---

शास्त्रार्थ में हरा कर पूर्व प्रतिज्ञानुसार राजा से आधा राज्य लेकर राज्य भोग सुख में अत्यन्त मग्न हो गये थे। उस समय श्रीराममिश्र स्वामी जी ने अलर्क पत्र खिला कर इनका सत्व गुण बढ़ाया तथा अवसर पाकर श्रीभगवद्गीता का उपदेश दिया था। इस सदुपदेश से प्रभावित होकर श्रीयामुनाचार्य राजमद और राज्य राग इत्यादि दोषों को परित्याग कर किं बहुना आधे राज्य को भी त्याग कर श्रीरङ्ग पहुंचे वहाँ श्रीरङ्गनाथ भगवान् की सन्निधि में संन्यास लेकर उनकी सेवा में रहने लगे।

किंच, श्रीयामुनाचार्य ने सिद्धि त्रय इत्यादि ग्रन्थों का निर्माण कर कुटिल बुद्धि वाले पर वादियों को परास्त किया। इसलिये भी श्रीयामुनाचार्य स्वामी जी "निरस्त जिह्मग स्पर्श" कहलाते हैं। एवं विध प्रभावसंपन्न भक्तराज श्रीयामुनाचार्य स्वामी जी के विषय में भगवान् श्रीकृष्णचन्द्र जी बहुत आदर करते थे। क्योंकि श्रीकृष्ण भगवान् ने गीता में कहा है कि "ज्ञानी [illegible] मे मतम्" अर्थात् ज्ञानी भक्त मेरी आत्मा ही है।

तापमुन्मूलयन्तीत्यत्राप्यन्वयः। स्वर्गलोकस्थाः कल्पवृक्षाः स्वर्गे एव मकरन्दं स्यन्दयन्ति। संयमीन्द्रप्रबन्धास्तु दिवि भुवि च संसारदशायां मुक्तिदशायां च हरिपदरूपमकरन्दमनुभावयन्ति। मतान्तरप्रबन्धा न केवलं निःसाराः, किंतु निम्बफलकल्पा अपीति भावः।

*"अनुगतबहुशाखाः" कल्पवृक्षा विस्तृतनानाशाखा भवन्ति, प्रबन्धा अपि नानावेदशाखानुगमनवन्तो भवन्ति। श्रीभाष्यकार-

---

श्रीरामानुज स्वामी जी के ग्रन्थों में समता हो जाती है क्योंकि कल्प वृक्ष हरिपद अर्थात इन्द्र लोक में मधु को बहाने वाले होते हैं, श्रीरामानुज स्वामी जी के ग्रन्थ हरिपद अर्थात् श्रीभगवच्चरण रूपी मधु को बहाने वाले अर्थात् वर्णन करने वाले होते हैं। हाँ, विशेषता यह है कि कल्पवृक्ष स्वर्गलोक में ही मधु को बहाते हैं भूलोक में नहीं। श्रीरामानुज स्वामी जी के ग्रन्थ तो भूलोक और स्वर्ग आदि लोकों में सर्वत्र श्रीभगवच्चरण रूपी मधु को बहाते हैं। जैसे कल्पवृक्ष आश्रितों के लिये मधु को बहाते हैं वैसे ही ये ग्रन्थ भी अपने आश्रितों के लिये श्रीभगवच्चरण रूपी मधु को बहाते हैं। इन ग्रन्थों को परिशीलन करने वाले विद्वद्गण इन ग्रन्थों के आश्रित हैं। मतान्तरस्थ ग्रन्थ श्रीभगवच्चरण रूपी मधु को नहीं बहाते हैं नहीं वर्णन करते हैं वे तो निःसार हैं, निम्बवृक्ष के समान हैं। श्रीभाष्यकार स्वामी जी के ग्रन्थ कल्प वृक्षों के समान हैं।

हरन्ति, किंतु सांसारिकतापत्रयमपि निःशेषं नाशयन्ति। कल्पवृक्षा इन्द्रस्य स्वभूताः। एते प्रबन्धाः संयमीन्द्रस्य स्वभूताः।

पूर्वश्लोकयोः सूक्तिरुक्तिरिति स्त्रीलिङ्गनिर्देशादुत्तमस्त्रीगुणाः सर्वेऽपि सूक्तौ सन्तीत्युक्तं भवति। अत्र प्रबन्धा इति पुंलिङ्ग-निर्देशात् उत्तमपुरुषगुणाः सर्वेऽपि प्रबन्धेषु सन्तीत्युक्तं भवति। उत्तमपुरुषाः कल्पवृक्षवत् उदारा निष्पापा नानाशाखाध्ययन-सम्पन्ना भगवत्कथामृतं परेषु वर्षन्तस्तापनिवर्तकाश्च भवन्ति। तथैवैतेऽपि प्रबन्धा इति सौसादृश्यमुत्तमपुरुषप्रबन्धयोरिति भावः ॥३१॥

---

है, कल्पवृक्ष एक सुर्य ताप को दूर करते हैं, श्रीभाष्यकार स्वामी जी के ग्रन्थ तो तापत्रय को दूर करते हैं।

पूर्व श्लोकों में "सूक्ति" "उक्ति" स्त्रीलिंग शब्द से निर्देश कर श्रीदेशिक स्वामी जी ने यह सूचित किया कि श्रीभाष्यकार स्वामी जी की श्रीसूक्ति में वे सब गुण पाये जाते हैं जो गुण उत्तम स्त्रियों में पाये जाते हैं। यहाँ पर श्रीदेशिक स्वामी जी पुलिङ्ग प्रबन्ध शब्द से निर्देश कर यह सूचित करते हैं कि श्रीभाष्यकार स्वामी जी के ग्रन्थों में वे सब गुण विद्यमान हैं जो उत्तम पुरुषों में पाये जाते हैं। उत्तम पुरुष उदार होते हैं, अतएव अनेक पदार्थों को देते हैं, उत्तम

अत्र इतरसिद्धान्ता अपसिद्धान्तत्वाच्छ्रीभाष्यकारेण खण्डिता इति यदुक्तं तत्कथं संगच्छेत ? सर्वेश्वर एव हि बुद्धाद्यवतारान् गृहीत्वा बौद्धादिमतानि स्थापयामास अतस्तेषां सिद्धान्तानामपसिद्धान्तत्वं कथं वक्तुं युज्यते ? श्रीभाष्यकारेण तेषां खण्डनं च कथं युज्यते ? इति प्राप्तायाः शंकायाः सर्वेश्वरो यागादि कर्माणि न कार्याणि, अहिंसापरमो धर्मः इत्यादि परिहासोक्तिभिर्लीलां चिकीर्षन् तदर्थं युगान्तरत्वे वयस्यानां दुर्लभत्वात् सर्व-

---

शाखाओं से सम्बन्ध रखते हैं, तथा श्रीभगवद्गुणों को दूसरों पर बरसाते हैं ॥३१॥

पूर्व श्लोकों में श्रीदेशिक स्वामी जी ने यह बतलाया कि इतर सिद्धान्त अपसिद्धान्त हैं अर्थात् अप्रामाणिक सिद्धान्त हैं, अतः श्रीभाष्यकार स्वामी जी ने उनका खण्डन किया। यहाँ पर यह प्रश्न उठता है कि इतर सिद्धान्तों को अपसिद्धान्त कैसे कहा जाय, क्योंकि उन सिद्धान्तों को भी सर्वेश्वर श्रीभगवान् ने ही तो चलाया। यह अर्थ पुराणों में वर्णित है कि श्रीभगवान् ने बुद्ध आदि के रूप में अवतार लेकर बौद्ध आदि मतों को चलाया। ऐसी स्थिति में श्रीभगवान् से प्रवर्तित उन सिद्धान्तों को अपसिद्धान्त कहना कैसे संगत होगा। श्रीभाष्यकार स्वामी जी के द्वारा उनका खण्डन भी कैसे उचित होगा ? इस प्रश्न का उत्तर यह है कि श्रीभगवान् के मन में इच्छा हुई कि हम लीला विभूति में परिहास की बातें कहकर जीवों के साथ क्रीड़ा करें। तदर्थ श्रीभगवान् उपयुक्त समय देखते रहे। कलियुग का प्रारम्भ हुआ। श्रीभगवान् उपयुक्त समय समझ कर कलियुग में बुद्ध इत्यादि के रूप में अवतार लेकर अहिंसा ही परमधर्म है, अतः यज्ञयाग नहीं करना चाहिये इत्यादि परिहास की बातें कहकर जीवों के साथ क्रीड़ा

कर्मत्यकरं कलियुगं प्रवर्त्य तैर्बौद्धाद्यपसिद्धान्तैः क्रीडितुमारेभे । राज्ञि निरंकुशस्वातन्त्र्यात् क्रीडायामत्यादरेण स्वस्य विहितं कर्मानादृत्य अन्त्यवर्णे शूद्रे इव स्वैराचाररते प्रजानां हिताहित-चिन्तां हित्वा क्रीडति सति मन्त्रिप्रभृतयो राजनिवारणेऽनौचित्यं पश्यन्तः प्रजाः प्रति इदानीं राजा स्वाच्छन्द्याद्यथाभिमतमा-चरति, तत्र भवद्भिर्नान्वेतव्यम्, अन्वयेऽवद्यं स्यादित्युक्त्वा यथा दण्डेन निवारयेयुः, तथा श्रीविष्वक्सेनः सर्वेश्वरस्य निवारण-

---

करने लगे, श्रीभगवान् ने इन बातों को केवल परिहासार्थ कहा हृदय से नहीं, क्योंकि ये बातें अनादि वेद शास्त्र के विरुद्ध हैं। परन्तु राजस और तामस मनुष्य इस मर्म को न समझ कर इन्हीं बातों को यथार्थ मानकर उन वेद विरुद्ध मतों में प्रविष्ट होने लगे। यहाँ पर यह बात ध्यान देने योग्य है कि राजा पूर्ण स्वतन्त्र रहते हैं, यदि कोई राजा क्रीड़ा में प्रवृत्त हो जाता है तो उसकी क्रीड़ा में प्रतिदिन रुचि बढ़ती है, क्रीड़ा में वह रत रहता है अपने विहित कर्मों को भी त्याग देता है, धीरे २ शूद्र के समान उसका आचरण हो जाता है, प्रजाओं के हिताहित को ख्याल न करके वह प्रजाओं के साथ क्रीड़ा करता रहता है। उस समय मन्त्रिगण असमञ्जस में पड़ जाते हैं क्योंकि वे राजा को रोक नहीं सकते, मन्त्रिगण के पास एक ही उपाय रह जाता है कि वे प्रजा को समझाकर इस क्रीड़ा से दूर रक्खें, अतः उस समय मन्त्रिगण प्रजाओं को एकान्त में समझते हैं कि इस समय राजा स्वच्छन्द होने के कारण मनमानी सोचते हैं बोलते हैं और करते भी हैं, प्रजा को उसमें नहीं फँसना चाहिये, फँसने पर अनर्थ होगा। इस प्रकार समझा कर मन्त्रिगण प्रजाओं को लाठी से रोकते हैं। वैसे ही प्रकृत में भी समझना चाहिये। श्रीभगवान् उपर्युक्त समय

मनुचितमुत्पश्यन् प्रजासु अनुग्रहातिरेकात् युष्माभिस्तेष्वप-सिद्धान्तेषु न प्रवेष्टव्यमिति निवारणार्थं वेत्रदण्डं त्रिदण्डरूपेण धारयन् श्रीभाष्यकाररूपेणावततार इत्थं सर्वेश्वरेणेतरसमयानर्म-क्रीडार्थं परिगृहीतत्वादपसिद्धान्ता इति सुवचम्, तेषां खण्डनं च युक्तमित्युत्तरमभिप्रयन्नाह—

नानाभूतैर्जगति समयैर्नर्मलीलां विधित्सोः
अन्त्यं वर्णं प्रथयति विभोरादिमव्यूहभेदे ।

---

कलि को आया हुआ देखकर बुद्धादि के रूप में अवतार लेकर परिहास वचनों से वेद विरुद्ध मतों को प्रचार करते हुये लीला विभूति में जब जीवों के साथ क्रीड़ा करने लगे, उस समय कलियुगी मनुष्य उन मतों में प्रविष्ट होकर अधोगति प्राप्तकर रहे थे, जीवों की इस दुर्दशा को देखकर श्रीविष्वक्सेन सूरि जी के मन में दया उमड़ पड़ी। किन्तु वे क्या करें, सर्वं स्वतन्त्र सर्वेश्वर को तो रोक नहीं सकते, अतः उन्होंने प्रजा को समझाना चाहा कि ये सब सिद्धान्त अपसिद्धान्त हैं क्योंकि ये वेद विरुद्ध हैं, वेद ही अपौरुषेय होने से स्वयं भू प्रमाण हैं। श्रीभगवान् ने इन सिद्धान्तों को हृदय से नहीं कहा है केवल ऊपर से कहा है, क्योंकि ये सब वचन श्रीभगवान् के परिहास वचन हैं, इनको यथार्थ मानकर इनमें न फँसना चाहिये, फँसने पर अनर्थ ही होगा। इस प्रकार प्रजाओं को समझा कर वेद मार्ग में प्रतिष्ठित करने के लिये श्रीविष्वक्सेन सूरि जी ने श्रीयतिराज भाष्यकार स्वामी जी के रूप में अवतार लिया, उनके हाथ में रहने वाला वेत्रदण्ड ने (बेंत) त्रिदण्ड के रूप में अवतार लिया। इस उत्तर को व्यक्त करते हुये श्रीदेशिक स्वामी जी कहते हैं —

**विश्वं त्रातुं विषयनियतं व्यञ्जितानुग्रहः सन्**
**विष्वक्सेनो यतिपतिरभूद् वेत्रसारस्त्रिदण्डः ॥३२॥**

*"जगति नानाभूतैः समयैर्नर्मलीलां विधित्सोर्विभोः" जगति नानाभूतैः परस्परविजातीयैः सिद्धान्तैर्विभुः सर्वेश्वरो नर्मलीलां परिहासलीलां विधातुमैच्छत् । एकैकोऽपि सिद्धान्तो नानाप्रकारोभवति, बौद्धमते वैभाषिकसौत्रान्तिकयोगाचारमाध्यमिकभेदेन चत्वारो भेदाः सन्ति । पाशुपतमते कापालकालामुखपाशु-

---

*जगति*—जगत् में, *नानाभूतैः समयैः*—अनेक सिद्धान्तों द्वारा, *नर्मलीलां विधित्सोः विभोः*—भगवान के लीला करने की इच्छा करने पर, और इसके लिये, *आदिमव्यूहभेदैः अन्त्यं वर्णं प्रथयति सति*—व्यूह भेद से अन्तिम रूप ग्रहण करने पर, *विषयनियतं*—विषयों में अनुरक्त, *विश्वम् त्रातुम*—विश्व की रक्षा करने के निमित्त, *व्यञ्जितानुग्रहः सन्*—अपने अनुग्रह को दिखाते हुये, *विष्वक्सेनः*—विष्वक्सेन, *यतिपतिः अभूत*—यतिराज हुये और, *वेत्रसारः त्रिदण्डः*—उनका दण्ड त्रिदण्ड ।

पतशैवभेदेन चातुर्विध्यमस्ति, अद्वैतमते जीवाज्ञानवादिब्रह्माज्ञान-वादिजरन्मायावादिभेदेन बहुविधो भेदो वर्तते। इत्थं सर्वेष्वपि मतेषु विविधोऽवान्तरभेदोऽस्ति। लीलोपकरणानामेकजातीयत्वे लीलारसो न निष्पद्येत। अत एभिर्नानाभूतैः समयैः श्रीभगवान् नर्मलीलां कर्तुमियेष। "निष्किञ्चना वयं शश्वन्निष्किञ्चनजन-प्रियाः। वृता वयं गुणैर्हीना भिक्षुभिश्श्लाघिता मुधा। अथात्म-नोऽनुरूपं वै भजस्व क्षत्रियर्षभम्।" इति यथा श्रीरुक्मिणीं प्रति श्रीकृष्णः परिहासवचांसि जगाद, तथा श्रीभगवान् बुद्धादिरूपेणा-

---

भेद हैं (१) माध्यमिक सिद्धान्त (२) योगाचार सिद्धान्त (३) सौत्रान्तिक सिद्धान्त (४) और वैभाषिक सिद्धान्त पाशुपत मत में भी चार अवान्तर भेद हैं (१) कापाल सिद्धान्त (२) कालामुख सिद्धान्त (३) पाशुपत सिद्धान्त (४) शैव सिद्धान्त। अद्वैत सिद्धान्त में भी अवान्तर भेद अनेक हैं (१) जीवाज्ञानवाद (२). ब्रह्माज्ञानवाद (३) जरन्मायावाद इत्यादि। इस प्रकार अनेक विध सिद्धान्तों को लेकर श्रीभगवान् परिहासार्थ क्रीड़ा करने लगे। यह क्रीड़ा जीवों के साथ श्रीभगवान् की एक प्रकार से हँसी है। श्रीभगवान् ने श्रीकृष्णावतार में भी एक समय श्रीरुक्मिणी जी से हास्य किया। उस प्रसंग में श्रीभगवान् ने कहा कि 'हे प्रिये! हम अकिञ्चन हैं, अकिञ्चन लोग हम पर प्रेम करते हैं, हम अकिञ्चनों पर प्रेम करते हैं, हम गुण हीन हैं, भिक्षु गण ने आपके समीप जाकर व्यर्थ मेरी स्तुति की। इसलिये आपने भ्रम में पड़कर मुझे वरण किया। यदि इस समय भी आप अपने अनुरूप श्रेष्ठ क्षत्रिय को वरण करतीं तो अच्छा होता।' इस प्रकार श्रीकृष्ण भगवान् ने श्रीरुक्मिणी का अभिप्राय जानने के लिये परिहास किया। वैसे ही श्रीभगवान् ने बुद्ध रूप में जीवों के साथ

वतीर्य अहिंसापरमोधर्म इत्यादि उक्त्वा यागादिषु श्रद्धां ह्रसयामास। कांश्चित् जीवाननुप्रविश्य "शिव एव परं तत्वम्" "सर्वं मिथ्या" इत्यादिरीत्या कांश्चित्परिहासोक्तीर्जगाद। एवमुक्त्वा स क्रीडितुमियेष। एवं क्रीडितुमियेष विभुः प्रभुः, स निरंकुशस्वतन्त्रत्वात्केनापि निवारयितुं न शक्यते।

इत्थं परिहासोक्तीः शृण्वन्तो जना यदि विद्युरिमाः परिहासोक्तयः न तु यथार्था इति, तर्हि लीलारसो न निष्पद्येत, युगान्तरस्था जनाः "अहिंसा परमो धर्मः" अतो यज्ञादिकर्म

न कार्यमिति वादान् परिहासजल्पितान्येव मन्येरन् न तु यथार्थत्वेन, अतो न तदुक्त्यनुसारेण प्रवर्तेरन् परं तु सांप्रतं तथाविधं युगान्तरं न प्रवर्तते किं तु दुरितलतिकोपघ्नायितात्मा करालः कलिःप्रवर्तते इत्याह—

*"आदिमव्यूहभेदेऽन्त्यं वर्णं प्रथयति सति" कलियुगस्य तामसराजसप्रचुरत्वात् मोहकरी वार्ता यथार्थत्वेन बुध्येरन्नेतद्युगस्था जनाः अतस्तस्यापि लीलारसो निष्पद्येत। कलियुगप्रवृत्तिः कथं ज्ञायते इति चेत् त्रिमोभगवत आदिमव्यूहभेदे वासुदेवव्यूहभेदेऽन्त्यं वर्णं कृष्णवर्णं प्रथयति प्रकटयति सति कलियुगप्रवृतिः

---

और द्वापरयुग में कही होती तो उस युग की जनता अवश्य इन वाक्यों को परिहास वचन समझ जाती, उनमें न फँसती, किन्तु श्रीभगवान् ने इन बातों को कलियुग में कहा, अतः युग भी श्रीभगवान के अनुकूल हो गया। यह कहते हैं कि—

"आदिमव्यूहभेदेऽन्त्यं वर्णं प्रथयति" कलियुग में राजस और तामस मनुष्य ही अधिक मात्रा में उत्पन्न होते हैं, सात्विक मनुष्य कम मात्रा में उत्पन्न होते हैं। राजस और तामस मनुष्य भ्रम उत्पन्न करने वाले श्रीभगवान के इन परिहास वचनों को यथार्थ मानकर इनमें फंस जाते हैं, तब श्री भगवान् को लीलारस प्राप्त होता है। यह कैसे विदित होता है कि कलियुग आरम्भ होगया? कहते हैं कि कलियुगारम्भ के चिन्ह प्रगट होने लगे। उस चिन्ह का अब वर्णन किया जाता है। श्रीभगवान के पाँच रूप हैं (१) पर (२) व्यूह (३) विभव (४) अर्चा (५)अन्तर्यामी। उनमें व्यूहरूप के चार भेद होते हैं (१) वासुदेव (२) संकर्षण (३) प्रद्युम्न (४) अनिरुद्ध। व्यूह में प्रथम रूप जो वासुदेव

ज्ञातुं शक्यते। अयं भावः व्यूहवासुदेवस्य कृतयुगे श्वेतरूपं त्रेतायुगे रक्तरूपं द्वापरयुगे पीतरूपं कलियुगे कृष्णरूपमिति युगभेदेन रूपभेदः सात्त्वतसंहिता लक्ष्मीतन्त्रादौ वर्ण्यते। अतो व्यूहवासुदेवो यदा कृष्णरूपं बिभर्ति, तदा कलियुगस्यप्रवृत्तिरिति सुज्ञानम्। राजापि क्रीडनकाले कर्मलोपमप्यजानन् चतुर्थवद्वर्ते-तेति सूच्यते। "भगवानपि तारात्रीःशारदोत्फुल्लमल्लिकाः। वीक्ष्य रन्तुं मनश्चक्रे योगमायामुपाश्रितः॥ तदोडुराजः ककुभः करैर्मुखं प्राच्याविलिम्पन्नरुणेन शन्तमैः। स चर्षणीनामुदगाच्छुचोमृजन् प्रियः प्रियाया इव दीर्घदर्शनः॥ इति श्रीकृष्णे रासक्रीडां कांक्षमाणे यथा शरत्कालश्चन्द्रिका च साह्यार्थमाजग्मतुः, तथा भगवति नर्मलीलां चिकीर्षति कलिरपि साह्यार्थमुपतस्थे।

इत्थं सर्वेश्वरे नर्मक्रीडोद्युक्ते युगस्वभावाज्जनेषु परिहासो-क्तितामबुद्ध्वा यथार्थोक्तितां बुद्ध्वा मतान्तरेषु प्रविश्य नश्यत्सु

सत्सु तद्दर्शी श्रीविष्वक्सेनो जगद्रक्षणार्थं श्रीभाष्यकाररूपेणा-वततारेत्याह—

*"विष्वक्सेनो विषयनियतं विश्वं त्रातुं व्यञ्जितानुग्रहः सन् यतिपतिरभूदिति" विष्वक्सेनो विश्वं त्रातुमैच्छत्। कुतः? विषयनियतम् अयं सर्वोऽपिजीवराशिः स्वकीये विषये राज्ये एव नैयत्येन वसति अतोऽवश्यं त्रातव्यः "ते वयं भवता रक्ष्या भवद्विषयवासिनः" इत्युक्तन्यायात्। किं च विष्वक्सेनो विश्वं विषयनियतं यथा तथा त्रातुं व्यञ्जितानुग्रहो बभूव। तत्तद्विषया-

---

में प्रविष्ट हुई तथा अधोगति को प्राप्त होने लगी। जनता की इस दुर्दशा को देखकर उसे बचाने के लिये दयालु श्रीविष्वक्सेन सूरि ने श्रीभाष्यकार स्वामी जी के रूप में अवतार लिया। इसी बात को कहते हैं कि—

"विष्वक्सेनो विश्वं विषयनियतं त्रातुं व्यञ्जितानुग्रहःसन् यतिपतिरभूत्" इस कलियुगी जनता की रक्षा करने के लिये श्रीविष्वक्सेन सूरि के हृदय में दया उमड़ी। उन्होंने सोचा कि इस कलियुगी जनता को किसी तरह से बचाना चाहिये। क्योंकि यह जनता विषय नियत है अर्थात् हमारे राज्य में ही रहती है राज्य के बाहर नहीं। दण्डकारण्यवासी महर्षियों ने श्रीरामचन्द्र जी से यही तो प्रार्थना की कि "ते वयं भवता रक्ष्या भवद्विषयवासिनः" अर्थात् आप हम लोगों को अवश्य रक्षा करें क्योंकि हम लोग आपके राज्य में निवास करते हैं। दण्डकारण्यवासी महर्षियों को जिस प्रकार श्रीरामचन्द्र जी ने रक्षा की, उसी प्रकार इस कलियुगी जनता की भी रक्षा करनी चाहिये। ऐसा विचार कर श्रीविष्वक्सेन सूरि ने संकल्प किया कि श्रीभाष्यकार स्वामी जी के

नुगुणं त्रातुमैच्छत् परमतस्थानां वादेनोज्जीवनं स्वमतस्थाना-मुपदेशेनोज्जीवनमिति तत्तद्विषयानुरोधेन रक्षणार्थमनुग्रहं चकार। यद्वा विषयनियतं कृत्वा त्रातुं व्यञ्जितानुग्रहो बभूव। विश्वं स्वविषये नियतं कृत्वा रक्ष्यं जगत् स्वाज्ञापालकं विधाय त्रातुमैच्छत्। रक्ष्यवस्तुनः स्वाधीनत्वाभावे रक्षणमशक्यम्, मतान्तरे प्रविष्टानां तत्र प्रावण्यं विनिवर्त्य सदुपदेशादिभिः स्वमतेऽभिरुचिमुत्पाद्य रक्षितुमिच्छन् यतिपतिरभूत्, सेनापतेर्यतिपतित्वमेव हि शोभा-वहम्, अतो यतिपतिरभूत्।

---

रूप में अवतार लेकर अनेक प्रकार के उपायों से इस जनता की रक्षा करनी चाहिये। परमतस्थ विद्वानों को शास्त्रार्थ में हराकर अपने संप्रदाय में दीक्षित कर रक्षा करना चाहिये, अपने संप्रदायस्थ जनता को सदुपदेश देकर रक्षा करनी चाहिये। इस प्रकार उन २ मनुष्यों के लिये जो जो उचित उपाय हैं उन उपायों को काम में लाकर इस जनता की रक्षा करनी चाहिये। तथा इस जनता को सर्व प्रथम ऐसा अपने अधीन कर लेना चाहिये कि अपनी आज्ञा को अक्षरशः पालन कर सके, इस प्रकार इस जनता को अपनी आज्ञा पालक बनाकर रक्षा करनी चाहिये। क्योंकि जब तक रक्ष्यवस्तु अपने आधीन नहीं होती तब तक उसकी रक्षा कैसे की जा सकती है। इस प्रकार विचार कर श्रीविष्वक्सेन सूरि जी ने मतान्तर में फंसी जनता को उन मतान्तरों से निकाल कर सदुपदेश से अपने संप्रदाय में रुचि उत्पन्न करा कर रक्षा करने के लिये श्रीरामानुज स्वामी जी के रूप में अवतार लिया। श्रीविष्वक्सेन सूरि जी श्रीभगवान के सेनापति हैं, सेनापति अवतार दशा में भी पति हो बनकर रहे, क्योंकि श्रीरामानुज स्वामी जी यतिपति हैं। अधिपति कोई भी कहीं भी अधिपति के रूप में रहे

*"वेत्रसारस्त्रिदण्डः" श्रीविष्वक्सेनस्य करस्थो वेत्रदण्डो यतिपत्यवतारे त्रिदण्डोऽभूत् । त्र्यवयवो दण्डस्त्रिदण्ड इति विग्रहः । अयं भावः व्यूहवासुदेवं कृष्णीभवन्तमालोक्य श्रीविष्वक्सेने हा हन्त सर्वेश्वरोऽपि कृष्णालंकारं बिभर्ति, भुवि कलिः प्रवृत्त इति विज्ञायते, सर्वेश्वरोऽपिनर्मलीलां कर्तुमारेभे, अयमस्माभिर्निरोद्धुं न शक्यते, भुवि साधवो दुर्मतेषु प्रविश्य नश्येयुः, किं करवाणि इति विचिन्त्य सत्वरं विस्मृतवेत्रे गजेन्द्ररक्षोद्यत-

---

तो उनसे सुचारु रूप से कार्य किया जा सकता है। यदि स्वामी को कहीं भृत्य बनकर रहना पड़े, भृत्य को कहीं स्वामी बनकर रहना पड़े तो दोनों भी सुचारु रूप से कार्य नहीं कर सकते। अतः सेनापति यतिपति बने तो अच्छा ही हुआ, यतिपति के रूप में वे सुचारु रूप से ही अपने कर्तव्य को सम्भालेंगे।

"वेत्रसारस्त्रिदण्डः" श्रीविष्वक्सेन सूरि जी सर्वदा वेत्र (वेंत) दण्ड को धारण करते हैं। उनका वह वेत्र दण्ड श्रीभाष्यकारावतार में त्रिदण्डरूप से अवतार लेकर श्रीरामानुज स्वामी जी के श्रीहस्त को सुशोभित करने लगा। श्रीविष्वक्सेन सूरि जी ने श्रीवैकुण्ठ में देखा कि श्रीव्यूह वासुदेव भगवान श्याम हो रहे हैं, अतः प्रतीत होता है कि भूलोक में कलि आगया है, तब श्रीविष्वक्सेन सूरि जी ने नीचे मुख करके जब देखा तो उन्हें विदित हुआ कि श्रीभगवान बुद्धावतार लेकर वेद विरुद्ध सिद्धान्तों को अपने परिहास वचनों से प्रचार कर रहे हैं, जनता उनके परिहास वचनों को यथार्थ वचन मान कर उन वेद विरुद्ध सिद्धान्तों में फंसकर नष्ट हो रही है। श्रीभगवान को रोकना अपने स्वरूपानुरूप नहीं है। जनता को समझाकर बचाना चाहिये। ऐसा सोचते हुए श्रीविष्वक्सेन सूरि जी अपने वेत्रदण्ड को

हरिवदाधाव्य भुवि श्रीभाष्यकाररूपेणावतीर्णे तदीयो वेत्रसारोऽपि मां विहाय किल ययौ मया विना किमपि कार्यं न सिध्येत्किलेति विचिन्त्य त्रिदण्डरूपेण पश्चादवतीर्य यतिपतिहस्तमाससाद। अयमर्थो वाक्यभेदेन फलति ॥३२॥

पूर्वश्लोके श्रीविष्वक्सेनसूरिः श्रीभाष्यकाररूपेणावततारेत्युक्तम्। अत्र श्रीभाष्यकारस्य श्रीविष्वक्सेनावतारत्वेऽपि विशिष्टग्रन्थनिर्माणं विना आचार्यकं न शोभेत, अपूर्वः प्रथमतो बुद्धया-

---

भी न लेते हुये उतने वेग से भूलोक के संमुख दौड़ पड़े जितने वेग से श्रीभगवान श्रीगजेन्द्र की रक्षा के लिये दौड़े थे। श्रीविष्वक्सेन सूरि जी ने अतिशीघ्र भूलोक में आकर श्रीरामानुज स्वामी जी के रूप में अवतार लिया। वेत्रदण्ड श्रीवैकुण्ठ में ही रह गया। वह भी एक नित्य सूरि ही है। उन्होंने सोचा कि क्या करें श्रीविष्वक्सेन सूरि जी भूल से हम को यहीं छोड़कर चले गये। मुझे विना लिये वे कुछ भी नहीं कर सकते, क्या किया जाय। उन्होंने निर्णय किया कि श्रीविष्वक्सेन सूरि जी ने श्रीरामानुज स्वामी जी के रूप में अवतार लिया है अब मुझे त्रिदण्ड रूप में अवतार लेकर उनके हाथ को सुशोभित करना चाहिये। ऐसा निर्णय कर वेत्रदण्ड ने त्रिदण्ड रूप का धारण किया। इससे सिद्ध होता है कि श्रीरामानुज स्वामी जी श्रीविष्वक्सेन सूरि जी के अवतार हैं ॥३२॥

कर्षकस्तत उच्चारणयोग्यस्ततोऽनुभाव्यस्ततोऽनुभवपरीवाहात्मना प्रवचनयोग्यस्ततः श्रोतॄणां भोग्यः पापहरः श्रेष्ठतमानि सुग्रह-दुर्ग्रहाणि तात्पर्याणि गर्भीकुर्वन् ग्रन्थ एवाचार्यकं शोभयेत्, किमेतदीयो ग्रन्थस्तथाविध इति शंकायां प्राप्तायां स्वच्छसमुद्राय-माने श्रीभाष्यकारप्रबन्धे एते सर्वेऽपि गुणाः सन्तीति समाधान-मभिप्रेत्याह—

लक्ष्यं बुद्धे रसिकरसनालास्यलीलानिदानं
शुद्धास्वादं किमपि जगति श्रोत्रदिव्यौषधं नः ।

---

के निर्माण से ही सुशोभित होगा। वे ग्रन्थ ऐसे होने चाहिये कि वे सर्वप्रथम बुद्धि को आकर्षण करने वाले हों अनन्तर उच्चारण के योग्य हों, इसके अनन्तर अभ्यास रूपी अनुभव के योग्य हों, अनन्तर अनुभव के परीवाह रूप में प्रवचन करने के लिये भी योग्य हों, अनन्तर श्रोता लोगों के लिये भोग्य हों, श्रोताओं के पाप को मिटाने वाले हों, तथा सुलभ श्रेष्ठ तात्पर्यों से भरे हों। इस प्रकार के उत्तम ग्रन्थों से आचार्यत्व की शोभा बढ़ती है क्या श्रीभाष्यकार स्वामी जी ने इस प्रकार के उत्तम ग्रन्थों का निर्माण किया? इस शंका का समाधान यह है कि हाँ, श्रीभाष्यकार स्वामी जी ने ऐसे उत्तम ग्रन्थों का अवश्य निर्माण किया। उन ग्रन्थों में ये सब गुण विद्यमान हैं। वे ग्रन्थ समुद्र के समान हैं, इनमें अनेक तात्पर्य रूपी रत्न भरे हुये हैं। इस शंका और समाधान को मन में लेकर श्रीदेशिक स्वामीजी यह श्लोक कहते हैं—

लक्ष्यालक्ष्यैः सितजलधिवद्भाति तात्पर्यरत्नैः
लक्ष्मीकान्तस्फटिकमुकुरो लक्ष्मणार्योपदेशः ॥२३॥

*"बुद्धेर्लक्ष्यम्" स्वच्छं जलं दर्शनकाल एव बुद्धिमाकर्षति, बुद्धेर्लक्ष्यंभवति, पंकिलं तु बुद्धिं नाकर्षति। अतएवाकर्दमं रमणीयं तमसाजलं पश्यन् श्रीवाल्मीकिः "अकर्दममिदं तीर्थं भरद्वाज निशामय। रमणीयं प्रसन्नाम्बु सन्मनुष्यमनो यथा॥"

---

इति शिष्यं प्रति निशामयेति वदन् ततः "न्यस्यतां कलशस्तात दीयतां वल्कलं मम। इदमेवावगाहिष्ये तमसातीर्थमुत्तमम् ॥" इत्याह। आम्रफलमित्युक्तमात्र एव तत्र यथा बुद्धिः प्रवर्तते, तथा श्रीभाष्यादिग्रन्थ इत्युक्तमात्र एव तत्र बुद्धिः प्रवर्तते अतः स तदैव बुद्धेर्लक्ष्यो भवति। "स्मृतिर्व्यतीतविषया मतिरागामिनी मता। बुद्धिस्तात्कालिकीप्रोक्ता प्रज्ञा त्रैकाल्यवर्तिनी ॥" इति तात्कालिकज्ञानं बुद्धिरित्युच्यते इति तात्कालिकबुद्ध्याकर्षकत्वाद् बुद्धेर्लक्ष्यमित्युक्तम्। वस्तुविषयकप्राथमिकज्ञानस्य प्रियत्वं वस्तुगुणाधीनमिति श्रीभाष्यादिग्रन्थस्यगुणपरिपूर्णत्वं फलति। यद्वा यावान् प्रज्ञातिशयोऽस्ति तावतो विषयम् तमित्यर्थः।

पिपासोः स्वच्छजले तात्कालिके प्रीतिरूपापन्ने ज्ञाने

---

का मन भी पाप शून्य रमणीय और प्रसन्न रहता है। यहीं कलश को रख दो, मुझे वल्कल दो, मैं तमसा नदी के इस उत्तम जल में ही स्नान करूंगा।" इस कथन से यह सिद्ध होता है कि दीखते ही तमसा नदी के स्वच्छ जल ने महर्षि के मन का आकर्षण किया। लोक में भी देखा जाता है कि किसी उत्तम भोग्य पदार्थ का नाम सुनते ही मन आकृष्ट हो जाता है। वैसे ही श्रीभाष्य इत्यादि ग्रन्थों के नाम सुनते ही उधर बुद्धि आकृष्ट होकर केन्द्रित हो जाती है। किसी वस्तु में उत्तम गुण होने पर ही उस वस्तु को देखते ही मन उधर आकृष्ट हो सकता है। श्रीभाष्य आदि ग्रन्थों में उत्तम गुण परिपूर्ण हैं, अतएव उनके नाम सुनते ही मन उधर आकृष्ट होता है। मतान्तर के ग्रन्थों में मन के आकर्षण करने की शक्ति नहीं है।

पिपासु मनुष्य यदि कहीं स्वच्छ जल को देखले तो उसका मन

उदिते पश्चात्पानेच्छया यथा रसना नृत्येत् तथा श्रीभाष्यादि-ग्रन्थो प्रथमतः प्रीतिरूपापन्ने ज्ञाने उदिते पठित्वाऽनुभवनीय-मिति उत्पद्यमाना या इच्छाया ग्रन्थ एव मूलकारणमित्याह—

४३"रसिकरसनालास्यलीलानिदानम्" रसिकानां जिह्वाया नर्त-नस्य कारणमित्यर्थः। स्वच्छजलमपि कमलस्य धत्तूरपुष्पस्य च भेदमजानतामिव गङ्गाजलस्य पत्रसंकरकषायजीर्णकूपजलस्य च भेदमजानतामरसिकानां रसनालास्यलीलाया निदानं न स्यात्। तथैव श्रीमद्रामायणस्य कुकविप्रबन्धस्य च तारतम्य-मजानतामरसिकानां रसनां प्रति श्रीभाष्यादिग्रन्थानामनभिरु-

चितत्वेऽपि न दोष इति भावः। नर्तनकर्त्री स्त्री अपि रसिक-सम्बन्धं प्राप्य तेषां गृहेऽभिवृद्धा चेत् तस्या नर्तनमत्यद्भुतं स्यात्। रसनेति स्त्रीलिङ्गस्वारस्येन नर्तकत्वमुक्तं भवति। रसिक-रसनेतिनिर्देशेन रसिकसम्बन्धं प्राप्तवतीति सूच्यते। रसिका च सा रसनेति कर्मधारयो वा। पिपासोः स्वच्छजलदर्शने पातुं यथा जिह्वा नृत्येत् तथा श्रीभाष्यादिग्रन्थे दृष्टमात्रे एव पठनार्थं जिह्वा-नृत्यतीतिभावः।

ततोऽनुभवयोग्योऽपि भवतीत्याह—*"शुद्धास्वादम्" इति। विशुद्धस्यानुभवस्य विषयो भवति। अनुभवस्य विशुद्धत्व-मानन्दपुरस्सरत्वम्। ज्वरनिरासार्थं क्रियमाणं कषायपानमानन्द-

---

में भेद न समझने वाले अरसिकों की जिह्वा को यदि श्रीभाष्य आदि ग्रन्थ नहीं नचा सकें तो इन ग्रन्थों में कोई दोष नहीं होगा। नाचने वाली स्त्री यदि रसिक के घर में ही उत्पन्न हुई हो तो उसका नर्तन अत्यन्त अद्भुत होगा। यहाँ रसना शब्द स्त्रीलिङ्ग है। इससे सिद्ध होता है कि जिह्वा भी एक स्त्री है, वह रसिकों के मुख में रहती है, वहीं उत्पन्न हुई वहीं बढ़ी है, अतः उसका नर्तन अवश्य अद्भुत होगा। भाव यह है कि जिस प्रकार प्यासे मनुष्य को स्वच्छ जल दीखने पर पीने की इच्छा से जिह्वा तड़पती है, उसी प्रकार श्रीभाष्य आदि ग्रन्थों को देखने पर पढ़ने के लिये जिह्वा तड़पती है।

पुरःसरं न भवति। स्वच्छजलं यथाऽऽनन्दपुरस्सरमास्वाद्यते, तथा श्रीभाष्यादिग्रन्था आनन्दपुरःसरं पठनादिमुखेनानुभाव्या भवन्तीत्यर्थः। इतरग्रन्थाः द्रष्टमप्यनभिरुचिता रसनायां निधातुमयोग्या इति तेषामास्वादनमसंभवि। इत्थमाचार्यैः स्वयं पठित्वाऽभ्यस्यानन्दमनुभूयानन्दपरीवाहतया प्रवचने क्रियमाणे अस्माकं कर्णश्राव्यं पापव्याधेरौषधं च भवतीत्याह—

*"किमपि जगति श्रोत्रदिव्यौषधं नः" जगति किमपि नः श्रोत्रदिव्यौषधमित्यन्वयः। अस्माकं कर्णयोर्लोके विलक्षणं दिव्यौषधं वर्तते। श्रोत्राभ्यां सेव्यमौषधं वर्तते इति यावत्। लोके औषधं मुखेन भुक्तं व्याधिं निवर्तयतीति प्रसिद्धम्।

---

उसका आनन्द नहीं होता। श्रीभाष्य आदि ग्रन्थों का अध्ययन वैसा नहीं है। किन्तु अमृत पान के समान है। मतान्तर के ग्रन्थ तो न देखने के योग्य है, न जिह्वा में रखने के योग्य हैं, उनका अभ्यास और अनुभव तो असंभव है।

"किमपि जगति श्रोत्रदिव्यौषधं नः"—आचार्यगण श्रीभाष्य आदि ग्रन्थों का अध्ययन कर उससे अपार आनन्द का अनुभव करते हैं, जब वह आनन्दानुभव उनके हृदय में नहीं समाता, तब प्रवचन के रूप में बाहर निकल पड़ता है तब हम लोगों को सुनने का भाग्य मिलता है। श्रीभाष्य आदि ग्रन्थ हम लोगों को सुनने में ही मनोहर लगते हैं, हमारे पाप रूपी व्याधि को मिटा देते हैं। अतः वे अत्युत्तम औषधियों के समान हैं। क्योंकि जिस प्रकार लोक में औषधियाँ व्याधि को दूर करती है। वैसे ही श्रीभाष्य आदि ग्रन्थ संसार रूपी व्याधि को दूर करते हैं। अतः ये ग्रन्थ भी एक प्रकार से उत्तम औषधि ही हैं।

इदं दिव्यौषधं तु कर्णाभ्यां श्रुतमेव संसारव्याधिं निवर्तयति, श्रवणकाले सुखावहं च भवति। अतएव किमपीत्युच्यते। क्षुत्पीडितस्य दिव्यमिष्टान्नवितरणस्थाने अन्नक्षेत्रे श्रुते एव यथाऽऽनन्दो भवति, तथा पिपासोः स्वच्छदिव्यतीर्थे श्रुते एवानन्दो भवेत् किल। जगति इतरग्रन्थाः श्रोत्राभ्यां श्रुता संसारव्याधिनिवर्तकौषधभावं न भजन्ते, श्रुताः पापमेव वर्धयेयुः।

*लक्ष्मीकान्तस्फटिकमुकुरः" क्षीराम्भोनिधावनन्तशयनमध्यासीनयोर्दिव्यदम्पत्योर्मुखसौन्दर्यादिदिदृक्षायामुदितायामन्य-

---

हाँ, लौकिक औषधियों से श्रीभाष्य आदि औषधियों में बहुत अन्तर है। लोक में औषधियों को मुख में डालकर यदि खाया जाय तभी वे व्याधि को दूर कर सकती हैं, ये श्रीभाष्य आदि ग्रन्थ तो कान से सुनने मात्र से ही पाप रूपी व्याधि को दूर करते हैं। सुनते समय भी ये सुख देते हैं। इसलिये श्रीभाष्य आदि ग्रन्थ विलक्षण दिव्यौषधियाँ हैं, इसमें सन्देह नहीं। क्षुधा से पीडित मनुष्य यदि सुनलें कि अमुक स्थान में मिष्टान्न वितरित होता है तो उसको सुनने मात्र से उन्हें आनन्द होता है प्यास से विह्वल मनुष्य को स्वच्छ जल का स्थान सुनते ही आनन्द होता है, वैसे ही संसार पीडित हम लोगों को श्रीभाष्य के सुनने से अपार आनन्द होता है। इतर ग्रन्थ सुनने मात्र से संसार व्याधि को नष्ट नहीं कर सकते, उलटे पाप को बढ़ा सकते हैं।

स्य दर्पणस्यापेक्षा नास्ति, स्वच्छक्षीरसमुद्र एव स्फुटिकदर्पणी-भवन्नुपकुर्यात्। तथैव श्रीदिव्यदम्पत्योर्गुणादिदिदृक्षायामुदितायां श्रीभाष्यादिग्रन्थाः स्फटिकदर्पणवदुपकुर्वन्ति, श्रीभाष्यादौ दृष्टे स्वकीया गुणा ईदृशा इति ताभ्यां स्फुटं विज्ञायते। इतरग्रन्था-स्तथा श्रीभगवद्गुणान् विशदं न प्रकाशयेयुः। श्रुतिरपिनिर्गुण-वाक्यघटितत्वान्न्यायैर्विशोधनमन्तरा न विशदं प्रकाशयेत्। लक्ष्मीकान्तं विशदं दिदृक्षमाणानामस्माकमपि स्फटिकदर्पणवदुप-

करोति। "दृष्ट्वा मनौ मणिदर्पणे" "व्यापकादर्शदृष्टे" इति ह्युच्यते। श्रियःपतिरेव परा देवता, स एव ब्रह्मशब्दवाच्य, स एव जगत्कारणम्, स एव सर्वफलप्रदः मुमुक्षूपास्यो मुक्तिदो मुक्तभोग्यः सर्ववेदान्तप्रतिपाद्य इति श्रीभाष्ये प्रथमश्लोक एव प्रदर्शयति किल।

*"लक्ष्मणार्योपदेशः" श्रीभाष्यकारस्योपदेशरूपाग्रन्था इत्यर्थः।

---

सिद्ध हुआ कि श्रीभाष्य आदि ग्रन्थ दिव्य दम्पति के लिये स्फटिक दर्पण की तरह काम देते हैं। इतना ही नहीं, किन्तु हम लोगों को भी यदि श्रीभगवान् के गुणों को समझने की इच्छा हो तो श्रीभाष्य आदि ग्रन्थ बहुत उपकार करते हैं क्योंकि ये ग्रन्थ स्फटिक दर्पण की तरह श्रीभगवान् के गुणों को विशद रूप में हम लोगों के सम्मुख रखते हैं। लौकिक दर्पण से श्रीभाष्य आदि दर्पण में बहुत अन्तर है क्योंकि लौकिक दर्पण देखने वाले के मुखादि अवयव उनमें रहने वाले सौन्दर्य आदि गुणों को दिखा सकते हैं, दूसरे मनुष्य के मुख आदि को दिखा नहीं सकते, उसमें दूसरे मनुष्य के आत्म गुणों को सर्वथा नहीं दिखा सकते। यहाँ तो श्रीभाष्य आदि ग्रन्थों को हम लोग देखते हैं, ये ग्रन्थ श्रीभगवान् के स्वरूप रूप विभूति और आत्मगुणों को स्पष्ट दिखाते हैं। क्योंकि श्रीभाष्य के प्रथम श्लोक में ही इन श्रीभगवद् गुणों को विशद बतलाता है, कि श्रीभगवान् ही पर देवता हैं, वे ही परब्रह्म हैं, वे ही सकल जगत के कारण हैं सर्वफलों को देने वाले हैं मुमुक्षुओं के उपास्य हैं, मुक्ति के दाता हैं मुक्तों के भोग्य हैं, सर्व वेदान्तों से प्रतिपाद्य हैं इत्यादि। अतः इसमें सन्देह नहीं कि श्रीभाष्य आदि ग्रन्थ स्फटिक दर्पण के समान हैं।

*"लक्ष्यालक्ष्यैस्तात्पर्यरत्नैः सितजलधिवद्भाति" स्वच्छ-जलधिरामः श्रीभाष्यकारग्रन्थः । तयोर्बहुमुखं साम्यं वर्तते। उदधिरपारमहिमवान् यस्मिन् सर्वाणि भुवनानि कुक्षौ कुर्वन् हरिः शेते । श्रीभाष्यादिग्रन्थोऽप्यपारमहिमवान् यस्मिन् अतिविस्मय-नीयस्वरूपरूपगुणविभवैश्वर्यशीलादिनिधिर्हरिः प्रतिपाद्यः सन्नि-वसति । समुद्रस्य महिमाऽपारो यतस्तस्य पुत्रकोटिनिविष्टाः कल्प-वृक्षकामधेनुचिन्तामणयोऽर्थिनां मनोरथान् पूरयन्ति । श्रीभाष्य-कारीयग्रन्थानां महिमाप्यपार एव, यतः श्रीभाष्यकारशिष्य-प्रशिष्यादिभिः प्रणीता श्रीभाष्यादिसिद्धान्तप्रतिपादनपरा ग्रन्था जिज्ञासूनां वाञ्छाः पूरयन्ति । रत्नाकरस्यायं महिमा यदीयं

कौस्तुभरत्नं जिघृक्षुर्याचमानः पुरुषोत्तमो हस्तं प्रसारयामास। श्रीभाष्यकारोपदेशराशेरयं महिमा यदीयं शरणागतिगद्यं श्रोतुं श्रीरङ्गनाथः श्रोत्रे विस्तारयामास। समुद्रस्य स्वरूपमतिविस्तृतं सर्वभारसहं च यतस्समुद्रे एकतो हरिः शेते, अन्यतो हरेः शत्रवोऽसुराश्च निवसन्ति, अपरत्र पक्षवन्तः पर्वताः शरणार्थिनः स्थिताः एकत्रवडवानलोऽन्यत्रप्रलयमेघाश्च निवसन्ति। श्रीभाष्य-कारीयग्रन्थानामपि स्वरूपमतिविस्तृतं सर्वभारसहं च, यतोऽस्मिन्

---

से ही यदि जिज्ञासुओं की इच्छायें पूर्ण होती हैं तो श्रीभाष्यकार स्वामी जी के साक्षात् उपदेश रूपी ग्रन्थों की महिमा के विषय में क्या कहना है? (३) समुद्र की महिमा अपार है क्योंकि समुद्र से उत्पन्न श्रीकौस्तुभमणि को प्राप्त करने के लिये पूर्ण ब्रह्म पुरुषोत्तम श्रीभगवान् को भी भिक्षुक की तरह हाथ पसारने में संकोच नहीं हुआ। श्रीभाष्यकार स्वामी जी के जो उपदेश रूपी ग्रन्थों की राशि है, उसमें अन्तर्गत शरणागति गद्य को सुनने के लिये श्रीरंगनाथ भगवान् को अपने श्रोत्र को विस्तृत करने में अणुमात्र भी संकोच न हुआ। अतः श्रीभाष्यकार स्वामी जी के ग्रन्थों की महिमा अपार सिद्ध होती है। (४) समुद्र का स्वरूप अत्यन्त विस्तृत है अतएव सबको समुचित स्थान देता है क्योंकि समुद्र के एक भाग में शेषशायी भगवान आदि शेष पर शयन कर रहे हैं, दूसरे भाग में श्रीभगवान के जन्म वैरी असुरगण निवास करते हैं, तीसरे भाग में अपने २ पक्षों (पाँखों) के साथ असंख्य पर्वत इन्द्र से भयभीत होकर शरणार्थी बनकर भरे पड़े हैं, चौथे भाग में एक दिशा में वडवाग्नि दूसरी दिशा में प्रलयकाल के मेघ भरे रहते हैं। वैसे ही भाष्यकार स्वामी जी के ग्रन्थों के स्वरूप भी अत्यन्त विस्तृत हैं, अतएव सभी अर्थ इसमें समुचित रूप

विभूतिनिरूपणेन तत्त्वहितपुरुषार्थनिरूपणेन च तांस्तान् जिज्ञासून् कृतार्थयामास । समुद्रो यद्यपि स्वच्छत्वात् अन्तर्निहितानि रत्नानि दर्शयति, तथापि जानुदघ्नोऽयमिति मन्तुं न युज्यते गभीरत्वात् । तथैव श्रीभाष्यादिग्रन्थः प्रसादगुणयोगादन्तर्निहितानपि सूक्ष्मार्थान् स्फुटं दर्शयति तथापि सुग्रहोऽयमिति मन्तुं न युज्यते गभीरशयत्वात् । समुद्रस्य महिमैवायम् यत्तीरे महारत्नानि शेरते, श्रीभाष्यादिग्रन्थस्यायं महिमा यत्र प्रतिपंक्ति अनर्घानि तात्पर्यरत्नानि शेरते । तदिदमुच्यते *लक्ष्यालक्ष्यैः सितजलधिवद्भाति तात्पर्यरत्नैरिति । अयं भावः स्वच्छसमुद्रे

---

जिज्ञासुओं को श्रीभगवान के स्वरूप रूप गुण और विभूति का निरूपण कर अन्यान्य जिज्ञासु सज्जनों को तत्व हित और पुरुषार्थ का निरूपण कर इतर जिज्ञासु महानुभावों को पूर्ण काम बनाया। (६) समुद्र यद्यपि अत्यन्त स्वच्छ रहते समय अत्यन्त गहरे जल के अन्दर छिपे हुये रत्नों को भी अच्छी तरह से दिखाता है, तो भी यह समझना नहीं चाहिये कि वह समुद्र एक हाथ गहरा होगा। वैसे ही श्रीभाष्य इत्यादि ग्रन्थ भी प्रसाद गुण के कारण सूक्ष्म अर्थों को भी सुगम करा देते हैं तो भी यह समझना अनुचित होगा कि श्रीभाष्य आदि ग्रन्थों के सभी मर्म विदित होगये, क्योंकि श्रीभाष्य आदि ग्रन्थ अत्यन्त गम्भीर हैं। (७) यही समुद्र का महत्त्व है कि इसके तीर पर अनमोल रत्न बिखरे पड़े रहते हैं, वैसे ही श्रीभाष्य आदि ग्रन्थों का यही महत्व है कि इसके प्रत्येक वाक्य में अमूल्य तात्पर्य रत्न भरे रहते हैं। इसी बात को लेकर श्रीदेशिक स्वामी जी कहते हैं कि "लक्ष्यालक्ष्यैः सितजलधिवद्भाति" भाव यह है कि यद्यपि स्वच्छ समुद्र में रत्न दिखाई देते हैं, तो भी ऐसा नहीं कहा जा सकता कि

रत्नानि दृश्यानि अदृश्यानि च भान्ति, प्रथमतो दृष्टिपथमुपयातान्यपि तत्वतोऽज्ञातान्येव भवन्ति रत्नतत्वस्य परीक्षणमन्तरा दुर्बोधत्वात्। हस्ते गृहीत्वा परीक्षणे कृते एव तत्वतो विदितानि भवन्ति, तथा श्रीभाष्यादितात्पर्याण्यपि प्रथमत आपाततोविदितान्यपि तत्वतो विदितानि न भवन्ति तेषां मर्मणो दुर्वेदत्वात्। चिरपरिचये कृते एव तेषां मर्म ज्ञातुं शक्यते श्रीभाष्यतात्पर्याण्यपि रत्नवत् श्रेष्ठानि भवन्ति, श्रीभाष्यतात्पर्यं श्रीरामायणवत् तात्पर्य आपातप्रतीतावपि ज्ञातुं शक्यते, चिरपरिचये कृते सति समर्मकं विदितं भवति। श्रीभाष्यादिः श्रीलक्ष्मणार्योपदेश एवंविधमहिमवान् भाति, अद्यापि तथैव भाति, न कालभेदेनापि तद्बाधः, किंतु त्रिकालाबाधितमिदं पारमार्थिकं सत्यम् ॥२३॥

---

उनका तात्विक स्वरूप विदित हो गया क्योंकि उनको हाथ में लेकर अधिक समय तक परीक्षा करने पर ही उनका तात्विक स्वरूप समझ में आ सकता है। वैसे ही श्रीभाष्य आदि ग्रन्थों के तात्पर्य समझ में आने पर भी नहीं कहा जा सकता कि अच्छी तरह से समझ में आगया क्योंकि चिरकाल परिचय करने पर ही उसका मर्म समझ में आ सकता है। यह तात्पर्य भी विद्वानों की दृष्टि में रत्न के समान अमूल्य वस्तु है। श्रीमद्रामायण के श्लोकों का तात्पर्य यद्यपि पाठ करते समय ही विदित होजाता है तो भी चिरपरिचय करने पर ही उसका मर्म विदित हो पाता है, वैसे ही श्रीभाष्य आदि ग्रन्थों के तात्पर्य भी प्रथम श्रवण में भी विदित होते हैं तो भी उनका मर्म चिरपरिचय करने पर ही विदित हो पाता है। श्रीभाष्यकार स्वामी जी के दिव्य उपदेशमय श्रीभाष्य आदि ग्रन्थ स्वच्छ समुद्र की तरह महिम शाली हैं, आज भी वैसे ही हैं, आगे भी ऐसे ही रहेंगे। यह त्रैकालिक सत्य है ॥२३॥

पूर्वश्लोके श्रीलक्ष्मणार्योपदेशस्य प्रभावमुपवर्ण्यानेन श्लोकेन तादृशमुपदेशं प्राप्तवतां श्रीवैष्णवानामगजान्तैश्वर्येऽप्युपेक्षां वर्णयति—

स्थितिमवधीरयन्त्यतिमनोरथसिद्धिमतीं
यतिपतिसम्प्रदायनिरपायधनोपचिताः ।
मधुकरमौलिदघ्नमददन्तुरदन्तिघटा
करटकटाहवाहिघनशीकरशीभरिताम् ॥३४॥

*"यतिपतिसम्प्रदायनिरपायधनोपचिताः" यतिपति-सम्प्रदायरूपं यन्निरपायधनं तेनोपचिताः सम्पन्नाः इत्यर्थः ।

---

पूर्व श्लोक में श्रीरामानुज स्वामी जी के उपदेशमय ग्रन्थों का महत्व बतलाया गया। इस श्लोक में यह बतलाया जाता है कि श्रीरामानुज स्वामी जी से सत्संप्रदायार्थ रूपी महाधन को प्राप्त कर जो महानुभाव संपन्न हो गये हैं वे अपार ऐश्वर्य को भी तुच्छ समझते हैं क्योंकि ये श्रीरामानुज स्वामी जी से प्राप्त श्रीसंप्रदायार्थ रूपी महाधन से अत्यन्त तृप्त रहते हैं क्षुद्र लौकिक ऐश्वर्य को नगण्य समझते हैं—

सकाशात् प्राप्तं यत् सम्प्रदायार्थज्ञानरूपं निरपायं धनं तेन उपचिताः सम्पन्ना एतत्सम्प्रदायस्थाः श्रीवैष्णवाः इति ।

❀"मधुकरमौलिदघ्नमददन्तुरदन्तिघटाकरटकटाहवाहिघनशीकरशीभरिताम् अतिमनोरथसिद्धिमतीं स्थितिमवधीरयन्ति"—एते श्रीवैष्णवाः पूर्वोक्तरीत्या निरपायधनेन अत्यन्तं सम्पन्नत्वाद्धेतोरतिशयितमपि लौकिकमैश्वर्यमवधीरयन्ति तिरस्कुर्वन्ति । गजान्तमैश्वर्यमिति लोके गजान्ततया ऐश्वर्यस्य प्रसिद्धिः । तादृशं गजान्तैश्वर्यमपि तिरस्कुर्वन्ति । ऐश्वर्यस्य गजान्ततां वर्णयति—❀मधुकरेत्यादिना । मधुकराणां भ्रमराणां मौलिदघ्नेन शिरः

---

खुल जाने पर यह श्रीसंप्रदायार्थ रूपी महाधन उपयोग में आता है तथा बढ़ता जाता है। लौकिक धन से इह लोक परलोक और जन्मान्तर में भी प्रतिष्ठा बढ़ती है। श्रीरामानुज स्वामी जी से इस महाधन को प्राप्त कर श्रीवैष्णवगण अत्यन्त सम्पन्न हो जाते हैं, अतएव ये श्रीवैष्णव गण महान् ऐश्वर्य को भी तुच्छ समझते हैं। इस बात को कहते हैं कि—

"मधुकरमौलिदघ्नमददन्तुरदन्तिघटाकरटकटाहवाहिघनशीकरशीभरितामतिमनोरथसिद्धिमतीं स्थितिमवधीरयन्ति"—धन धान्य गृह क्षेत्र आराम पशुधन इत्यादि ऐश्वर्य में अन्तर्गत हैं, लौकिक ऐश्वर्य की सीमा है हाथी को पालना। इसलिये ही "गजान्तमैश्वर्यम्" ऐसा संस्कृत में कहा जाता है। श्रीस्वामी जी कहते हैं कि उत्तम ऐश्वर्य यही है कि मदजल बहाने वाले हाथी हों सामान्य हाथी को मदजल होता ही नहीं है। उत्तम हाथी का ही मदजल होता है, वह मदजल भी अल्प मात्रा में न बहे, किंतु इतनी अधिक मात्रा में बहे कि उस मदजल के गन्ध से आकृष्ट होकर पीने के लिये आये हुए भ्रमरगण डूब जायें।

रङ्गस्थान्नर्तयन् दिगन्तेषु प्रसरति, तथा निगमविमर्शलीलारसिकैः श्रीभाष्यकारस्य गुणप्रकाशनरूपे यशसि गुणपूर्णश्रीसूक्तिभिरभिनन्द्यमाने सति एतच्छ्रोतृषु श्रीरङ्गस्थेषु रसिकेषु नृत्योद्यतेषु स उद्घोषो दिगन्तान् व्याप्नोति, अतः श्रीभाष्यकारस्योत्कर्षः सर्वलोकविदितो भवतीति समाधानमभिप्रयन्नाह—

निरुपधिरङ्गवृत्तिरसिकानभिताण्डवयन्
निगमविमर्शकेलि (निरतैः) रसिकैर्निभृतैर्विधृतः ।
गुणपरिणद्धसूक्तिदृढकोणविघट्टनया
रटति दिशामुखेषु यतिराजयशः पटहः ॥३५॥

विषयीकृते शतगुणितार्थसिद्धिर्हि अतिमनोरथसिद्धिः । तादृश-सिद्धियुक्तामपि ऐश्वर्यस्थितिं तिरस्कुर्वन्ति, निरपायधनतुसत्वा-दितिभावः । अतएव ह्युच्यते "तृणीकृतविरिञ्चादिनिरंकुशविभूतयः । रामानुजपदाम्भोजसमाश्रयणशालिनः ॥" इति ॥३४॥

श्रीभाष्यादिग्रन्थान् प्रणीतवता श्रीरङ्गमधितिष्ठता श्रीभाष्य-कारेण सर्वलोकविदितेन किल भाव्यम्, तथात्वे एव हि उत्कर्षः सिद्ध्येत्, एतत्प्रतिपादितेष्वर्थेषु प्रामाणिकत्वबुद्धिश्च लोकस्यो-दियादिति शङ्कायाम् यथा नर्तनस्थले कोलिरसज्ञेन समर्थपुरुषेण पटहवाद्यं करे गृहीत्वा दृढदण्डेन वाद्यमाने तदुत्थः शब्दो

---

समझते हैं क्योंकि वे श्रीरामानुज स्वामी जी से प्राप्त संप्रदायार्थ रूपी महाधन से तृप्त रहते हैं अन्यान्य धन उसके सामने अत्यन्त तुच्छ प्रतीत होते हैं इसलिये ही कहा गया है कि श्रीरामानुज स्वामी जी के चरणाश्रित श्री वैष्णव ब्रह्मा जी इत्यादि देवताओं के अपार ऐश्वर्य को भी तृण के समान समझते हैं ॥३४॥

यहाँ पर यह शंका होती है कि श्रीभाष्यकार स्वामी जी भले श्रीभाष्य आदि ग्रन्थों का निर्माण कर श्रीरङ्ग में चिरकाल तक विराजमान रहे हों, इतने में उनका उत्कर्ष पूर्ण मात्रा में सिद्ध नहीं होगा। यदि वे सर्वलोक में विदित हुये होते और यदि उनकी कीर्ति देश देशान्तर में फैल गई होती तो उनका उत्कर्ष अवश्य सिद्ध होगा, उनके सिद्धान्त को भी संसार प्रामाणिक मानेगा, क्या श्रीभाष्यकार स्वामी जी की कीर्ति दिगन्त तक फैली हुई है ? इस शङ्का का समाधान इस प्रकार है कि नर्तन स्थल में रसिक गण पटह वाद्य को हाथ में लेकर दृढ़ दण्ड से ताड़न करें तो उस वाद्य से निकलने वाला शब्द

रङ्गस्थान्नर्तयन् दिगन्तेषु प्रसरति, तथा निगमविमर्शलीलारसिकैः श्रीभाष्यकारस्य गुणप्रकाशनरूपे यशसि गुणपूर्णश्रीसूक्तिभिरभिनन्द्यमाने सति एतच्छ्राविषु श्रीरङ्गस्थेषु रसिकेषु नृत्योद्यतेषु स उद्घोषो दिगन्तान् व्याप्नोति, अतः श्रीभाष्यकारस्योत्कर्षः सर्वलोकविदितो भवतीति समाधानमभिप्रयन्नाह—

निरुपधिरङ्गवृत्तिरसिकानभिताण्डवयन्
निगमविमर्शकेलि (निरतैः) रसिकैर्निभृतैर्विधृतः ।
गुणपरिणद्धसूक्तिदृढकोणविघट्टनया
रटति दिशामुखेषु यतिराजयशः पटहः ॥३५॥

*"निभृतैर्निगमविमर्शकेलिरसिकैर्विधृतोयतिराजयशः पटहः" पटहवाद्ये वाद्यमाने तदुत्थः शब्दो दिङ्मुखानि व्याप्नोति । तच्च पटहवाद्यं राज्ञां भवति । यतिराजस्य यश एव तत्पटहवाद्यम्, यतिराजस्य यशो गीयमानं दिगन्तान् व्याप्नोति । पटहो निगम-विमर्शकेलिरसिकैर्भरतशास्त्रज्ञैर्धृतो वर्तते । तथा नर्तनलीलारसिकैर्धृतो वर्तते, नर्तनरासिक्याभावे पटहं करेण ग्रहीतुमपि न ज्ञायेत किमुत वादयितुम्, तथा इदं श्रीयतिराजस्य गुणप्रथारूपं यशोऽपि रसिकैर्धृतं वर्तते, रसिकाः श्रीयतिराजस्य गुणप्रकाशनं कुर्वन्तीति

---

को आनन्दित कर नचाता हुआ, *दिशामुखेषु*—दिशाओं को, *रटति*—प्रतिध्वनित करता है ।

"निभृतैर्निगमविमर्शकेलिरसिकैर्विधृतः यतिराजयशः पटहः"—पटह एक वाद्य है, वह प्रायशः राजा के पास रहता है, भरत नाट्य शास्त्र के विचार में दक्ष नर्तन लीला रस के अनुभवी महानुभाव ही उस पटह वाद्य को बजाते हैं, नर्तन लीला को अच्छी तरह से समझने में असमर्थ पुरुष उस पटह बाजे को हाथ से छू ही नहीं सकते हैं, बजाना तो दूर । लोक में नर्तन लीला रस के रसिक भरत नाट्य शास्त्र के विद्वानों से वह पटह वाद्य बजाया जाता है । वैसे ही प्रकृत में भी समझना चाहिये । यतिराज श्रीभाष्यकार स्वामी जी का यश ही वह पटह वाद्य है । श्रीभाष्यकार स्वामी जी का जो गुण गान है, वही उनका यश है । पटह वाद्य राजा का होता है, यह यश यतिराज का है । दृष्टान्त में भरत नाट्य शास्त्र के पारंगत तथा नर्तन लीला रस के रसिक महानुभाव उस पटह वाद्य को बजाते हैं । वैसे ही प्रकृत में वेदान्त शास्त्र विचार में दक्ष तथा शास्त्रार्थ लीला रसिक महानुभाव श्रीभाष्यकार स्वामी जी के यश रूपी पटह वाद्य को बजाते हैं, अर्थात्

भावः । इमे च रसिका न सामान्यरसिकाः किंतु निगमविमर्श-केलिरसिकाः । भेदाभेदश्रुतयः सगुणनिर्गुणश्रुतयश्च परस्परं विरुद्धार्थाः किल सन्ति, एताः कथमुपपद्येरन्निति ऊहापोहकेलौ रसज्ञा इत्यर्थः । एते एव श्रुतीनामैककण्ठ्यं कृतवन्तं श्रीभाष्य-कारं प्रशंसेयुः । पटहवाद्यवादका बुद्धेर्विषयान्तरप्रावण्यं हित्वा निश्चलाः सन्तो नर्तनमनुसृत्य वाद्यं वादयेयुः । परस्परविरुद्धार्थ-तया भासमानानां श्रुतीनामैककण्ठ्यकारिणं श्रीभाष्यकारं प्रशंसितुं प्रवृत्ता अपि बुद्धेर्विषयान्तरप्रावण्यं निराकृत्य निश्चलाः सन्तः प्रशंसन्ति ।

---

पूर्वोक्त विद्वद्गण श्रीभाष्यकार स्वामी जी की कीर्ति का वर्णन करते हैं। वेदार्थ विचार में दक्ष विद्वद्गण ही श्रीभाष्यकार स्वामी जी के यश का वर्णन कर सकते हैं दूसरे नहीं। कारण यह है वेदों में नाना प्रकार के वचन हैं, कई सगुण वाक्य हैं, ये परब्रह्म को सगुण बतलाते हैं। कई निर्गुण वाक्य हैं, ये परब्रह्म को निर्गुण बतलाते हैं। ये दोनों वाक्य परस्पर विरुद्ध अर्थ को बतलाने वाले प्रतीत होते हैं। विद्वानों की जिज्ञासा होती है कि इनका समन्वय कैसा किया जाय ? वैसे ही वेदों में भेद श्रुतियाँ हैं जो जीव और ब्रह्म में भेद बतलाती हैं। वेद में अभेद श्रुतियाँ भी हैं जो जीव और ब्रह्म का अभेद बतलाती हैं। ये दोनों प्रकार की श्रुतियाँ परस्पर विरुद्धार्थ को बतलाने वाली प्रतीत होती हैं इनके विषय में विद्वानों की जिज्ञासा होती है कि इनका समन्वय कैसे किया जाय। श्रीरामानुज स्वामी जी ने श्रीभाष्य आदि ग्रन्थों में इन श्रुतियों को अच्छी तरह से समन्वय कर व्याख्या की, इस मनोहर व्याख्या को सुनने पर ही उन विद्वानों की जिज्ञासा शान्त होती है, वे विद्वद्गण आनन्द पर वश होकर

*"गुणपरिणद्धसूक्तिदृढकोणविघट्टनया" पटहवादनार्थो दण्डो रज्जुभिर्बद्धो दृढो वर्तते, अतएव दृढताडनेऽपि न भज्यते, तेन दण्डेन पटहवाद्ये वादिते ततो निःसृतः शब्दो बहुदूरं याति। तथा प्रकृते श्रीभाष्यादिश्रीसूक्तय एव कोणदण्डस्थानीयाः। श्रीभाष्यादिश्रीसूक्तयः शब्दगुणैरर्थगुणैर्विशेषयुक्ति-

---

श्रीभाष्यकार स्वामी जी के यश का गान करने लगते हैं।

पटह वाद्य को बजाने वाले लोग अपनी बुद्धि को इधर उधर न दौड़ाते हुये एकाग्र होकर निश्चल भाव से बाजा बजाते हैं, वैसे ही सभी श्रुतियों का समन्वय करने वाले श्रीभाष्यकार स्वामी जी की प्रशंसा में प्रवृत्त विद्वद्गण भी अपने बुद्धि को इधर उधर न दौड़ाते हुये एकाग्र होकर निश्चल भाव से श्रीभाष्यकार स्वामी जी का गुणगान करते हैं।

"गुणपरिणद्धसूक्तिदृढकोणविघट्टनया"—संस्कृत भाषा में गुण शब्द के दो अर्थ हैं (१) रस्सी (२) और अच्छे गुण। पटह वाद्य को बजाने वाले दण्ड से बजाते हैं वह दण्ड रस्सियों से बँधा हुआ रहता है, अतएव वह दृढ़ रहता है, अन्यथा जोर से बजाने पर टूटने का भय रहता है, इस प्रकार रस्सी से बँधे हुये दृढ़ दण्ड के जोर से प्रहार करने पर उस वाद्य से निकलने वाला शब्द अधिक दूर तक पहुँचता है। वैसे ही प्रकृत में भी समझना चाहिये। प्रकृत में श्रीभाष्यकार स्वामी जी का यश ही वह पटह वाद्य है, वेदान्त विचार में दक्ष तथा शास्त्रार्थ लीला में रसिक विद्वद्गण ही बजाने वाले लोग हैं। बजाने का दण्ड कौन है? श्रीभाष्यकार स्वामी जी की श्रीभाष्य आदि सूक्तियाँ ही वे दण्ड हैं जिनसे वाद्य बजाया जाता है। जिस प्रकार वह दण्ड गुण अर्थात् रस्सी से बँधा हुआ अतएव दृढ़ रहता है, वैसे ही श्रीभाष्य

गुणैश्च पुष्कला अतिकोमलपदघटिताः "पाठ्ये गेये च मधुरम्" इत्युक्तरीत्याऽतिमधुरशब्दसौष्ठवेन श्रीभगवद्गुणप्रतिपादकत्वादर्थ-सौष्ठवेन च पूर्णा वर्तन्ते। प्रवचनकाले पूर्वपक्षयुक्तिभिर्न खण्ड-येरन् तथा दृढतरयुक्त्यादिभिरुपोद्बलिता वर्तन्ते। वैदिकैरानन्दा-तिशयेन साट्टहासं श्रीभाष्यादिप्रवचने क्रियमाणे स घोषो दिङ्मुखानि मुखरयति।

❀"निरुपधिरङ्गवृत्तिरसिकानभिताण्डवयन् दिशां मुखेषु रटति" पटहे वादिते रङ्गे नर्तनस्थले वर्तमाना नटा नट्यश्च

---

आदि सूक्तियाँ भी गुणों से परिपूर्ण अतएव दृढ़ रहती हैं, इन सूक्तियों में शब्द गुण और अर्थ गुण परिपूर्ण रहते हैं, समीचीन युक्ति रूपी गुण भी पूर्ण मात्रा में विद्यमान हैं। इन सूक्तियों में अति कोमल शब्दों का विन्यास है। अतएव शब्द सौष्ठव झलकता है। इन सूक्तियों से श्रीभगवान् के कल्याण गुणों का प्रतिपादन होता है, अतएव अर्थ सौष्ठव भी झलकता है। अतः सिद्ध होता है कि ये सूक्तियाँ सब गुणों से परिपूर्ण हैं। प्रबल युक्तियों से ओतप्रोत होने के कारण ये सूक्तियाँ प्रवचनकाल में पूर्व पक्ष की युक्तियों से खण्डित नहीं हो सकती हैं, अतएव सुदृढ़ हैं। वैदिक विद्वद्गण आनन्द से प्रेरित होकर अट्टहास के साथ इन सूक्तियों का प्रवचन करते हुये जब श्रीभाष्यकार स्वामी जी के यश का उच्च स्वर से गान करते हैं, तब वह ध्वनि दिशाओं के कोण कोण तक पहुँचकर प्रतिध्वनित करता है।

नृत्येयुः, ते प्रयोजनान्तरपराश्चेत् प्रयोजनान्तराभावनिश्चये अति-मात्रं पटहे वादितेऽपि न नृत्येयुः, निरुपधिरसिकाश्चेत् पटहवाद्ये-यथाशास्त्रं वादिते स्वयमेवानन्दातिशयेन नृत्येयुः। तथात्र श्रीरङ्गे प्रयोजनान्तरपरतां विना केवलं भगवत्सेवार्थं नित्यनिवासं कुर्वन्तः "रसो वै सः" इति रसशब्दवाच्यं परंब्रह्मानुभवन्तः श्रीवैष्णवा-निरुपधिरङ्गवृत्तिरसिकाः। तानभितो नर्तयत्ययं वाद्यमानो यति-राजयशः पटहः। वैदिकैः श्रीरङ्गे क्रियमाणं श्रीभाष्यकालक्षेपं

---

रसिक नर्तक गण नाचने लगते हैं, यदि ये नर्तक गण दूसरे किसी प्रयोजन में इच्छा रखते हों तो उस प्रयोजन का अभाव विदित होने पर नहीं नाचेंगे, भले ही पटह वाद्य बजता रहे। यदि ये नर्तक गण दूसरे किसी प्रयोजन में भी इच्छा न रखने वाले विशुद्ध रसिक हों तो शास्त्रोक्त रीति से पटह वाद्य बजते ही आनन्द से मस्त होकर नाचने लगते हैं। इस प्रकार रङ्गस्थल में रहने वाले रसिकों को नचाता हुआ यह पटह ध्वनि दिशाओं को प्रति ध्वनित करता है। वैसे ही प्रकृत में भी समझना चाहिये। रङ्गस्थल अर्थात् नर्तन स्थल के समान है श्रीरङ्ग क्षेत्र। नर्तन स्थल में रहने वाले रसिकों के समान हैं श्रीरङ्ग में नित्यवास करने वाले रसिक श्रीवैष्णव गण। ये श्रीवैष्णव गण दूसरे किसी प्रयोजन को नचाहते हुये केवल श्रीभगवत सेवा के लिये ही श्रीरङ्ग में निवास करते हैं। श्रुति में "रसो वै सः" ऐसा रस रूप में वर्णित श्रीभगवान् का अनुभव करने वाले ये श्रीवैष्णव परम रसिक हैं।

शृण्वन्तस्तत्रत्या भगवत्परा आनन्दातिरेकेण नृत्यन्ति । यथा रङ्गस्थान् नटान् नर्तयन् वादितः पटहो दिशांमुखेषु प्रतिध्वनति, तथा श्रीवैष्णवैः श्रीभाष्यादिप्रवचनेन विस्तार्यमाणं यतिराजयशोऽपि दिशां मुखेषु प्रतिध्वनति, यतस्तत्रत्यैरप्याम्रेड्यते ॥३५॥

इत्थं पूर्वश्लोकैः परमतानि श्रीभाष्यकारेण खण्डितानि विशिष्टाद्वैतमतं दिगन्तविश्रान्तं कारितमिति यदुक्तं तत्कथं संगच्छेत, इदं नूतनं श्रीविशिष्टाद्वैतमतमपि श्रीभाष्यकारादधिक-

---

श्रीवैष्णव आनन्द से नाचने लगते हैं। इन श्रीवैष्णवों को नचाता हुआ यह यश गान नाना दिशाओं के कोण कोण में प्रति ध्वनित हो रहा है क्योंकि वहाँ के लोगों के मुख से भी श्रीभाष्यकार स्वामी जी के यश गान ही बारम्बार निकलता है। श्रीबदरीनाथ से लेकर कन्या कुमारी तक द्वारका से लेकर श्रीजगन्नाथपुरी तक सर्वत्र श्रीभगवान् की आरती (नीराजन) होने पर सभी श्रीवैष्णवों के मुख से यही तो निकलता है कि "सर्वदेशदशाकालेष्वव्याहतपराक्रमा । रामानुजार्यदिव्याज्ञा-वर्धतामभिवर्धताम् । रामानुजदिव्याज्ञा प्रतिवासरमुज्वला । दिगन्तव्यापिनीभूयात् सा हि लोकहितैषिणी ॥" यह श्रीभाष्ययार स्वामीजी के गुण गान के प्रति ध्वनि नहीं तो और क्या है ? अतः सिद्ध होता है कि श्रीभाष्यकार स्वामी जी का यश सभी दिशाओं में पहुँचा हुआ है । अतएव श्रीभाष्य-कार स्वामी जी का उत्कर्ष सर्व समान है ॥३५॥

पूर्वश्लोकों में श्रीदेशिक स्वामी जी ने कहा कि श्रीभाष्यकार स्वामी जी ने परमतों का खण्डन कर श्रीविशिष्टाद्वैत मत को देश देशान्तर में प्रचारित किया । इस पर यह शङ्का होती है कि श्रीभाष्यकार स्वामी जी से प्रचारित श्रीविशिष्टाद्वैत मत भी एक नूतन मत ही है, यह भी उत्तरकाल में किसी दिन धुरन्धर विद्वानों से खण्डित हो सकता है।

बुद्धिभिः पश्चात्तनैर्विद्वद्भिः किं न खण्ड्येत ? इत्यत्र वेदबाह्यानि मतान्येव नूतनानि, अनादिनिधना विच्छिन्नसंप्रदायापौरुषेय-वेदानुसारि श्रीरामानुजदर्शनं न नूतनम्, इदानीतनमतान्तरस्थ-कुमतिवत् अनेकेषां कुमतीनामुत्तरकाले संभवेऽपि तेषामपि मूलोत्सादने समर्था किल वर्तते श्रीयतीन्द्रसूक्तिरित्युत्तरमभिप्रयन्नाह—

---

इस शङ्का का समाधान यह है कि श्रीभाष्यकार स्वामी जी से प्रवर्तित श्रीविशिष्टाद्वैत मत नूतन मत नहीं है, यह मत वेदों पर आधारित है; वेद अपौरुषेय हैं, उनमें कोई दोष नहीं है, वेद अनादि काल से संसार में प्रचार में आये हैं, वेदों पर आधारित होने से श्रीविशिष्टाद्वैत मत परम प्राचीन है, श्रीरामानुज स्वामी जी ने उसका प्रचार मात्र किया, न कि किसी नूतन मत की सृष्टि की। वेद विरुद्ध जितने मत हैं वे ही नूतन हैं, वे प्रबल प्रमाणभित्ति पर प्रतिष्ठित नहीं हैं, अतएव 'परम वैदिक सुदृढ़ प्रमाणभित्ति पर प्रतिष्ठित श्रीविशिष्टाद्वैत मत से वे खण्डित हो जाते हैं। वेद विरुद्ध मत दो प्रकार के हैं (१) बाह्यमत (२) और कुदृष्टि मत। बौद्ध जैन और चार्वाक इत्यादि वादिगण वेदों को प्रमाण न मानते हुये जिन मतों की स्थापना की वे वेद बाह्य मत कहलाते है। वेदों को प्रमाण मानते हुये भी मतान्तरस्थ आचार्य गण वेदों का अयथार्थ अर्थ करके जिन मतों का प्रचारित किया वे मत कुदृष्टि मत कहलाते हैं। श्रीरामानुज स्वामी जी की श्रीसूक्तियाँ इन सब मतों का खण्डन करती है, इतना ही नहीं, उत्तरकाल में भी जो वेद विरुद्ध नूतन मत प्रगट होंगे, वे मत भी श्रीरामानुज स्वामी जी की श्रीसूक्तियों से खण्डित हो जाते हैं, श्रीरामानुज स्वामी जी की श्रीसूक्ति का इतना प्रभाव है। इस शङ्का और समाधान को मन में लेकर श्रीदेशिक स्वामी जी कहते हैं—

इदं प्रथमसंभवत्कुमतिजालकूलङ्कषा
मृषामतविषानलज्वलितजीवजीवातवः ।
क्षरन्त्यमृतमक्षरं यतिपुरन्दरस्योक्तयः
चिरन्तनसरस्वतीचिकुरबन्धसैरन्ध्रिकाः ॥३६॥

*"इदं प्रथमसंभवत्कुमतिजालकूलङ्कषाः" यतिपुरन्दरस्य यतीन्द्रस्योक्तय इदं प्रथमतया संभवतां कुमतिजालानामान्तरबाह्यभेदभिन्नानां कूलङ्कषाः समूलोन्मूलनकारिण्यः। यथोद्वेलप्रवहणशीला महानद्यः कूलंकषा भवन्ति, तथा श्रीभाष्यकारस्य श्रीसूक्तय

*इदं प्रथमसंभवत्कुमतिजालकूलङ्कषाः*—उत्पन्न हुये कुमति जाल को नष्ट करने वालीं, *मृषामतविषानलज्वलितजीवजीवातवः*—माया वाद की विषाग्नि से जलते हुये जीवों को जीवनौषधि प्रदान करने वालीं, *चिरन्तनसरस्वतीचिकुरबन्धसैरन्ध्रिकाः*—सनातन वेद वाणी को सजाने वालीं, *यतिपुरन्दरस्योक्तयः*—यतिराज की सूक्तियाँ, *अक्षरं*—नाश रहित, *अमृतं*—अमृत को, *क्षरन्ति*—बरसाती हैं।

"इदं प्रथमसंभवत्कुमतिजालकूलङ्कषाः"—जिस प्रकार महा नदी का प्रवाह तीर को काट २ कर गिराता है तीरस्थ वृक्षों को बहा कर ले जाता है; उस प्रवाह के वेग के सामने तीर और तीरस्थ वृक्ष कुछ नहीं कर सकते, उन्हें कटकर गिरना ही पड़ता है, उसी प्रकार ही बाह्यमत और कुदृष्टि मत इत्यादि वेद विरुद्ध मतों को काटकर गिराती हुई श्रीरामानुज स्वामी जी को श्रीसूक्तियाँ जगत में प्रवाहित हो रही हैं। इन सूक्तियों के प्रमाण तर्क वेग के सामने वे मतान्तर टिक नहीं सकते, उन्हें खण्डित होना ही पड़ेगा। वर्तमान मत ही नहीं किन्तु उत्तरकाल में होने वाले नूतन, नूतन प्रबल मत भी इन सूक्तियों से खण्डित हो जाते

आधुनिकानामिवपश्चात्तनानामपि आन्तराणां बाह्यानां च कुमति-जालानां समूलोन्मूलने समर्था भवन्ति, बुद्धेः सत्यपक्षपाति-त्वेन तत्त्वालोकस्य नानाविधमिथ्यासिद्धान्तनिराकरणसमर्थत्वात्। तदुच्यते "आचापोद्धापतः स्युः कतिकतिकविधीचित्रवत् तत्तदर्थे-ष्वानन्त्यादस्तिनास्त्योरनवधिकुहनायुक्तिकान्ताः कृतान्ताः । तत्त्वालोकस्तु लोप्तुं प्रभवति सहसा निःसमस्तान् समस्तान्

---

हैं। क्योंकि यह श्रीभगवान् की कृपा है जो उन्होंने बुद्धि का यह स्वभाव बना दिया है कि बुद्धि सर्वदा सत्य में पक्षपात करती है अर्थात् सत्य के प्रति ही झुक जाती है। बुद्धि तब तक असत्य अर्थों में भटकती रहती है जब तक सत्य का परिचय नहीं पाती, सत्य का परिचय होते ही असत्य अर्थों का परित्याग कर सत्य में रम जाती है। उदाहरण रस्सी पड़ी है, प्रकाश मन्द है, ठीक नहीं प्रतीत हो रहा है, कोई उस रस्सी को सर्प समझता है, कुछ समय के बाद उसे जल की धारा समझता है, अनन्तर उसे देखकर समझता है कि भूमि फट गई है, ये तीनों असत्य अर्थ हैं, इन असत्य अर्थों में बुद्धि तब तक फँसी रहती है, जब तक सत्य रस्सी को नहीं पहचानती है, रज्जु का भान होते ही बुद्धि उन अनेक असत्य अर्थों को सर्वथा परित्याग कर सत्य रज्जु का ही ग्रहण करती है। वैसे ही प्रकृत में भी समझना चाहिये। वेद बाह्यमत और कुदृष्टि मत इत्यादि असत्य मतों में तब तक ही बुद्धि फँसी रहती है, जब तक सुदृढ़ प्रमाणों में प्रतिष्ठित परम वैदिक सत्यनिष्ठ श्रीविशिष्टाद्वैत मत को पहचान नहीं लेती, पहचानते ही उन मिथ्या मतों को छोड़कर इस सत्य मत में आसक्त हो जाती है। अतः सिद्ध हुआ कि वेदों पर आधारित सत्यार्थ को बतलाने वाली श्रीरामानुज स्वामी जी की श्रीसूक्तियाँ भूत, भविष्य और वर्तमान

पुस्त्वे तत्वेन दृष्टे पुनरपि न खलु प्राणिता स्थाणुतादिः ।" इति ।

अथापि वैदिकमृषावादिमतप्रविष्टानां का हानिरित्यत्र तेऽपि विषाग्निदग्धा इव जाताः, तानपि श्रीभाष्यकारश्रीसूक्तय उज्जीवयन्तीत्याह—*"मृषामतविषानलज्वलितजीवजीवातवः" इति । मृषामतमेवब्रह्मव्यतिरिक्तं सर्वं मिथ्येति मतमेव विषानलोविषाग्निः,

---

मिथ्या मतों को काटने की क्षमता रखती है। उत्तरकाल में होने वाले नव, नव मतों का जाल अवश्य कट जायेंगे । इतना इन सूक्तियों का प्रभाव है ।

यहाँ पर यह शङ्का होती है कि अद्वैति वेदान्तियों का मत भी तो वैदिक है, वे वेद के आधार पर ही अपने मत का प्रतिपादन करते हैं, उस मत में प्रविष्ट होकर आत्मकल्याण प्राप्त करने में क्या आपत्ति है ? इस शङ्का का उत्तर यह है कि अद्वैती वादिगण सभी वेद वाक्यों का समन्वय कर अपने मत का प्रतिपादन नहीं करते हैं, एकाध अपने मत के अनुकूल वेद वाक्यों को ही लेकर अपने मत का प्रतिपादन करते हैं, अपने मत के प्रतिकूल वेद वाक्यों को गौण प्रमाण मानते हैं, अपने मन गढ़न्त अर्थों को वेदों पर आरोपित कर अपने मत को वैदिक कहते हैं, वेद विरुद्ध बौद्ध सिद्धान्त को अपना कर उसी को वैदिक रूप देते हैं, वस्तुतः बौद्ध मत के अनुयायी होने से उनका मत अवैदिक ही है। उनके मत का आश्रय लेने वालों को आत्म कल्याण नहीं हो सकता श्रीरामानुज सिद्धान्त का आश्रय लेने पर ही उनका आत्म कल्याण होगा इस बात को कहते हैं कि—"मृषामतविषानलज्वलितजीवजीवातवः"—अद्वैतियों का जो मत है वह मृषामत अर्थात् मिथ्या मत कहलाता है क्योंकि वे ब्रह्म को छोड़कर समस्त प्रपञ्च को मिथ्या कहते हैं। इस मिथ्यावाद को उन लोगों ने बौद्धों से भिक्षा

